# श्रीहीरकप्राभृतम्

## ( श्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थः )

## ( प्रथमः खण्डः )

देववाणी-परिषद्, दिल्ली

# श्रीहीरकप्राभृतम्

( आचार्यश्रीरमाकान्तशुक्ल-हीरकजयन्ती-शुभाभिनन्दनग्रन्थः )

## आचार्यश्रीरमाकान्तशुक्लः

( जन्मतिथिः पौष कृष्ण दशमी, वि.सं.१९९७, भौमवासरः )
( २४.१२.१९४० )

संयोजयित्री
आचार्यरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितिः

प्रकाशिका
देववाणी-परिषद्, दिल्ली

## आचार्यश्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितिः

# संरक्षक-मण्डलम्

**अध्यक्षः**

**आचार्यरामकरणशर्मा**

राष्ट्रपतिसम्मानितः संस्कृतविद्वान्

पूर्वकुलपतिः - का.सिं.द.सं.वि.वि. (दरभंगा), सम्पूर्णानन्दसंस्कृतवि.वि. (वाराणसी)

पूर्वाध्यक्षः संरक्षकश्च - देववाणी-परिषद् (दिल्ली), पूर्वाध्यक्षः - आई.ए.एस.एस.

**सदस्याः**

**महामहोपाध्याय आचार्यसत्यव्रतशास्त्री**

राष्ट्रपतिसम्मानितः संस्कृतविद्वान्, पद्मभूषणसमलङ्कृतः, लब्धज्ञानपीठपुरस्कारः

पूर्वकुलपतिः, ज.सं.वि.वि., पुरी - पूर्वसंस्कृतविभागाध्यक्षः, दिल्लीविश्वविद्यालयः

**महामहोपाध्याय आचार्यरेवाप्रसादद्विवेदी**

राष्ट्रपतिसम्मानितः संस्कृतविद्वान्, पूर्वाचार्याध्यक्षः प्राच्यविद्याविभागः - का.हि.वि.वि.

प्रोफेसर इमेरिटस (संस्कृत) - का.हि.वि.वि. वाराणसी

**महामहोपाध्याय आचार्य'अभिराज'राजेन्द्रमिश्रः**

पूर्वकुलपतिः - सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः (वाराणसी)

राष्ट्रपतिसम्मानितः संस्कृतविद्वान्, पूर्वाध्यक्षः- देववाणी-परिषद् (दिल्ली)

**महामहोपाध्याया आचार्या दीक्षितपुष्पा**

राष्ट्रपतिसम्मानिता संस्कृतविदुषी, अध्यक्षा - पाणिनिशोधसंस्थानम् (बिलासपुरम्)

**आचार्यराधावल्लभत्रिपाठी**

राष्ट्रपतिसम्मानितः संस्कृतविद्वान्, पूर्वकुलपतिः - राष्ट्रियसंस्कृतसंस्थानम्

पूर्वाचार्याध्यक्षः - डॉ.ह.सिं.गौ.वि.वि. (सागर), पूर्वाध्यक्षः- देववाणी-परिषद् (दिल्ली)

**आचार्यरामानुजदेवनाथन्**

पूर्वकुलपतिः, जगद्गुरुरामानन्दाचार्यसंस्कृतविश्वविद्यालयः, जयपुरम् (राजस्थानम्)

प्राचार्यः, श्रीरणवीरपरिसरः, राष्ट्रियसंस्कृतसंस्थानम् (जम्मू)

**श्रीमती रमा शुक्ला**

उपाध्यक्षा - देववाणी-परिषद् (दिल्ली)

## आचार्यश्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितिः

# परामर्शदातृ-मण्डलम्

### अध्यक्षः

आचार्यः **श्रीधरवासिष्ठः**, पूर्वकुलपतिः, ला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली

### सदस्याः

आचार्यः **पी.एन.शास्त्री**, कुलपतिः, राष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली
आचार्यः **रमेशकुमारपाण्डेयः**, कुलपतिः, ला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली
आचार्यः **देवनारायणझा**, कुलपतिः, का.सिं.द.सं.विश्वविद्यालयः, दरभंगा (बिहार)
आचार्यः **हरेकृष्णशतपथी**, कुलपतिः, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः (आन्ध्रप्रदेश)
आचार्यः **अर्कनाथचौधरी**, कुलपतिः, श्रीसोमनाथसंस्कृतविश्वविद्यालयः (गुजरात)
आचार्यः **महावीर-अग्रवालः**, कुलपतिः, उत्तराखण्डसंस्कृतविश्वविद्यालयः (उत्तराखण्ड)
आचार्यः **विनोदशास्त्री**, कुलपतिः, ज.रा.रा.संस्कृतविश्वविद्यालयः, जयपुरम् (राजस्थानम्)
आचार्यः **यदुनाथप्रसाददुबे**, कुलपतिः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः;वाराणसी (उ.प्र.)
आचार्यः **मिथिलाप्रसादत्रिपाठी**, पूर्वकुलपतिः, म.पा.सं.एवं वैदिक वि.वि. उज्जैन, (मप्र.)
आचार्यः **इन्द्रदत्त-उनियालः**, सम्पादकः, विश्वसंस्कृतम्, होशियारपुरम् (पंजाब)
आचार्या **शशिप्रभाकुमारः**, कुलपतिः, सांचीबौद्धभारतीयज्ञानअध्ययनवि.वि., भोपाल (मप्र.)
आचार्या **उमा.सी.वैद्यः**, कुलपतिः, कविकुलगुरुकालिदाससंस्कृतवि.वि., रामटेक, (महाराष्ट्र)
आचार्यः **रमेशचन्द्रपण्डा**, कुलपतिः, महर्षिपाणिनिसंस्कृतएवंवैदिकविवि., उज्जैन, (मप्र.)
आचार्यः **प्रफुल्लकुमारमिश्रः**, कुलपतिः, उत्तरी ओडिशावि.वि. (उडीसा)
आचार्यः **दीपकशर्मा**, कुलपतिः, कुमारभास्करवर्मासंस्कृत एवं प्राच्याध्ययनवि.वि., नलवारी(असम)
आचार्यः **गंगाधरपण्डा**, कुलपतिः, जगन्नाथसंस्कृतविश्वविद्यालयः, पुरी (उडीसा)
**उभयवेदान्तश्रीवी.एस.करुणाकराचार्यः**, आस्थानविद्वान्, श्रीमदाण्डवनाश्रमः, चेन्नई (तमिलनाडु)
आचार्यः **एस.रंगनाथः**, निदेशकः, आर.वी.इन्स्टीट्यूटआफसंस्कृतस्टडीज, बैंगलुरुः (कर्णाटक)
आचार्यः **हर्षदेवमाधवः**, एच.के.आर्टसकालेज, अहमदाबाद (गुजरात)
**पण्डितवसन्तगाडगीलः**, भारतीयसंस्कृतपत्रकारसंघस्य संरक्षकः। सम्पादकः, शारदा, पुणे (महाराष्ट्र)
आचार्यः **एम.सी.दिलीपकुमारः**, कुलपतिः, श्रीशंकराचार्यसंस्कृतवि.वि., कालडी, केरल
आचार्यः **पी.टी.जी.वी.रंगाचार्युलुः**, स्वर्णघण्टाकङ्कणालङ्कृतास्थानविद्वान्, हैदराबाद (तेलंगाना)
आचार्यः **पी.सी.मुरलीमाधवन्**, आचार्यः, संस्कृतविभागः, रासं.सं., गुरुवायूर्पपरिसरः (केरल)
आचार्यः **नारायणदाशः**, संस्कृतविभागाध्यक्षः, रामकृष्णमिशनकालेज,कोलकाता (पं.बंगाल)
आचार्यः **देवर्षिकलानाथशास्त्री**, सम्पादकः, भारती, जयपुरम् (राजस्थानम्)
आचार्यः **जनार्दनप्रसादपाण्डेयः 'मणिः'**, आचार्यः, रा.सं.सं., गंनाझापरिसरः;इलाहाबादः(उप्र.)
आचार्यः **मञ्जुलता शर्मा**, अध्यक्षा, संस्कृतविभागः, सेन्टजोन्सकालेज, आगरा (उत्तरप्रदेश)
आचार्यः **शीतांशुरथः**, आचार्यः, संस्कृतविभागः;सिं.प्रा.वि.शोधसंस्थान,वि.वि.वि.,उज्जैन (मप्र.)

## आचार्यश्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितिः

# शुभाभिनन्दनग्रन्थसमर्पणमण्डलम्

अध्यक्षः

**आचार्यगणेशदत्तशर्मा**

उपाध्यक्षः, दिल्लीसंस्कृताकादमी, नवदेहली

सदस्याः

**प्रो.रमेशचन्द्रभारद्वाजः**

संस्कृतविभागाध्यक्षः, दिल्लीविश्वविद्यालयः, नवदेहली

**प्रो.सी.उपेन्द्ररावः**

निदेशकः, विशिष्टसंस्कृताध्ययनकेन्द्रम्, जे.एन.यू., नवदेहली

**श्रीगोविन्दाचार्यः**

अध्यक्षः, श्रीनिवाससंस्कृतविद्यापीठम्, नवदेहली

**आचार्यविनोदचन्द्रपाण्डेयः**

प्राचार्यः, शारदादेवीसंस्कृतविद्यापीठम्, नवदेहली

**प्रो.ललितकुमारगौडः**

अध्यक्षः, संस्कृत-पालि-प्राकृतविभागः, कुरुक्षेत्रविश्वविद्यालयः, हरियाणा

**डॉ.जयकुमार-उपाध्ये**

अध्यक्षः, प्राकृतविभागः, ला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली

**डॉ.जीतरामभट्टः**

सचिवः, दिल्लीसंस्कृताकादमी, नवदेहली

**डॉ.बलदेवानन्दसागरः**

महासचिवः, भारतीयसंस्कृतपत्रकारसंघः, नवदेहली

## आचार्यश्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितिः

# स्वागतमण्डलम्

### अध्यक्षः

**आचार्यरवीन्द्रनागरः,** राष्ट्रपतिसम्मानितः, प्रधानाचार्यः, श्रीशं.सं.म.वि., भा.वि.भ., नवदेहली

### सदस्याः

**प्रो.भास्करमिश्रः,** आचार्यः, ला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली

**प्रो.राधाकान्तठाकुरः,** आचार्यः, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः, आन्ध्रपदेशः

**डॉ.शशितिवारी,** राष्ट्रपतिसम्मानिता संस्कृतविदुषी, सचिवः (वेव्स) नवदेहली

**मनोजकुमारशर्मा,** अधिवक्ता, दिल्लीउच्चन्यायालयः, नवदेहली

**डॉ.चन्द्रभूषणझाः,** आचार्यः, सेन्टस्टीफेन्समहाविद्यालयः, नवदेहली

**श्रीदिनेशचन्द्रचतुर्वेदी,** महासचिवः, छात्रबन्धुः, नवदेहली

**डॉ.राकेशरविः,** प्राचार्यः, श्रीचित्रगुप्तस्नातकोत्तरमहाविद्यालयः, मैनपुरी, उत्तरप्रदेश

**डॉ.अजयकुमारमिश्रः,** सहायकाचार्यः, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

**डॉ.गोकुलेन्द्रनारायणदेवगोस्वामी,** के.के.एच.शा.सं.म.वि., गुवाहाटी, असम

**डॉ.शैलकुमारीतिवारी,** पी.डी.एफ,यूजीसी,संस्कृतविभागः,वर्कर्सम.वि., जमशेदपुर, झारखण्ड

**डॉ.सुरचना त्रिवेदी,** सहायकाचार्या, भगवानदीनस्नातकोत्तरम.वि.,लखीमपुरखीरी, उ.प्र.

**डॉ.सुकेशशर्मा,** सहाचार्या, लाजपातरायस्नातकोत्तरमहाविद्यालय, साहिबाबाद, उत्तरप्रदेशः

**योगेशशर्मा,** सहायकाचार्यः, संस्कृतविभागः, पी.जी.डी.ए.वी.कालेज, नवदेहली

**डॉ.चन्द्रप्रकाशउप्रेती,** सं.प्रवक्ता, रा.इं.का., गंगानगर, मोतियापाथर, अल्मोड़ा,उत्तराखण्ड

**डॉ.दुर्गाप्रसादसिंहः,** अध्यापकः, से.मुकुन्दलालइण्टरकालेज, गाजियाबाद, उत्तरप्रदेश

**प्रवेन्द्रशर्मा,** ठाकुरश्रीजुगलकिशोरजीकामन्दिर, दतिया, मध्यप्रदेश।

**ज्योत्स्ना,** भारतसर्वकारे हिन्दीभाषानुवादिका, नई दिल्ली।

## आचार्यश्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितिः

# सम्पादक-मण्डलम्

**प्रधानसम्पादकः**

**आचार्य-इच्छारामद्विवेदः, 'प्रणवः'**

एम.ए.(संस्कृतम्), पुराणेतिहासाचार्यः, विद्यावारिधिः, आचार्योऽध्यक्षश्च
पुराणेतिहासविभागः, ला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली
अध्यक्षः, देववाणी-परिषद्, दिल्ली
संयोजकः, आचार्यश्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितिः

**सम्पादकः**

**डॉ. ऋषिराजपाठकः**

एम.ए.(संस्कृतम्), पीएच.डी., संगीतशिरोमणिः
सहसचिवः, देववाणीपरिषद्, नवदेहली

**सहसम्पादकौ**

**जीवनशर्मा**

एम.ए.(संस्कृतम्), दर्शनाचार्यः
सम्पादकः - संस्कृतवाणी, कार्यकारीसम्पादकः - संस्कृतरत्नाकरः

**सोमेशकाश्यपः**

छात्रः, बी.ए.आनर्स (संस्कृतम्) देहलीविश्वविद्यालयः

**प्राविधिकसहयोगः - चिरागरतड़ा**

बी.टेक. (इन्जीयनियरिंगछात्रः)

**अक्षरसंयोजकः - रामचन्द्ररेग्मी**

छात्रः, श्रीनिवाससंस्कृतविद्यापीठम्, नवदेहली

**प्रबन्धसम्पादकः**

**डॉ.चन्द्रमौलिशुक्लः**

बी.ए.एम.एस., एम.ए. (संस्कृतम्), पीएच.डी.

# सम्पादकीयम्

संस्कृतजगत् पद्मश्रीविभूषितेन राष्ट्रपतिसम्मानप्रमाणपत्रसभाजितेन संस्कृतकविना सम्पादकेन नैकग्रन्थकर्त्रा च **आचार्यश्रीरमाकान्तशुक्लेन** परिचितमस्तीत्यत्र शपथेन विभावयितुं किमपि नावशिष्यते।

आचार्यशुक्लस्य पञ्चसप्ततिवर्षसम्पूर्तौ **आचार्यश्रीरमाकान्तशुक्ल-हीरकजयन्तीशुभाभिनन्दनग्रन्थसमित्या श्रीहीरकप्राभृतम्** इत्याख्यो ग्रन्थः २४.१२.२०१५तमे दिनाङ्के डॉ.शुक्लाय समर्पयितुं निर्णयोऽकारि। ग्रन्थेऽस्मिन् प्रकाशयितुम् अधोदत्ताः विषयाः निर्धारिताः आसन्- १. आशीर्वादाः, शुभकामनाः सन्देशाश्च, २. श्रीशुक्लस्य परिचयः, साक्षात्कारः, तथा च तद्विषये गद्यपद्यात्मकाः विचाराः, ३. श्रीशुक्लस्य मौलिकसंस्कृतरचनानां काव्यानुवादानाञ्च परिचयः समीक्षा च, ४. श्रीशुक्लस्य संस्कृतरचनानां विद्वद्भिः कविभिश्च कृताः भाषान्तरानुवादाः, ५. श्रीशुक्लस्य समसामयिकानां संस्कृतकवीनां तेषां रचनानाञ्च परिचयः, ६. श्रीशुक्लस्य चित्राणां सपरिचयसङ्कलनम् तथा च ७. ग्रन्थे आलेखदातॄणां परिचयः।

विद्वांसः श्रीशुक्लस्य परिचिताश्च स्वकीयम् आशीर्वादं शुभाशंसनं, सन्देशम्, आलेखं, रचनाश्च स्वकीयेन परिचयेन अथ च चित्रेण साकं प्रेषयितुं प्रार्थिताः आसन्। हिन्दी-संस्कृत-अंग्रेजीमाध्यमैः लिखिता सामग्री आमन्त्रिता आसीत्। विद्वद्भिः वैदिकवाङ्मयं लौकिकसाहित्यम् अर्वाचीनं समकालिकं वा संस्कृत-साहित्यमवलम्ब्य लेखाः प्रेषिताः। श्रीशुक्लसम्बन्धीनि संस्मरणान्यपि कैश्चिज्जनैः प्रहितानि। ग्रन्थप्रकाशनकाले अस्याः सामग्र्याः संकलनं त्रिषु पुटबन्धेषु(जिल्द) क्रियते।

प्रथमे खण्डे १. आशीर्वादाः शुभकामनाः, २. श्रीशुक्लस्य परिचयः साक्षात्कारश्च, ३. तमवलम्ब्य विद्वद्भिः कविभिश्च प्रणीताः गद्यपद्यात्मकाः लेखाः रचनाश्च, ४. श्रीशुक्लस्य रचनानां विद्वद्भिः कविभिश्च भाषान्तरेषु कृताः काव्यानुवादाः, ५. श्रीशुक्लस्य समकालीनानां संस्कृतरचनाकाराणां परिचयः, ६. ग्रन्थे सहयोगकर्तॄणां परिचयः, ७. चित्रावली च।

द्वितीये खण्डे श्रीशुक्लस्य रचनानां हिन्दीमाध्यमेन कृतं शोधकार्यम्। अस्मिन् खण्डे डॉ.दुर्गाप्रसादसिंहेन पीएच.डी.शोधोपाध्यर्थं प्रस्तुतं ग्रन्थं पुस्तकाकारेण सम्पाद्य वयमत्र प्रस्तुमः। एतच्छोधकार्यं २००८तमे ख्रैष्टेऽब्दे सञ्जातम्। अत्र तदापर्यन्तं कृतानां श्रीशुक्लस्य रचनानां चर्चा विहिता अस्ति। परिचयोऽपि तत्कालपर्यन्तमेवावधिं व्याप्नोति। अतः सम्पादकैः तत्र तथ्यपरिवर्तनं न कृतम्।

## श्रीहीरकप्राभृतम्

तृतीयखण्डे श्रीशुक्लस्य २००८तमादूर्ध्वं प्रणीतानां किञ्च सर्वशुक्लोत्तरा-काव्यसंग्रहे संकलितानां रचनानां संस्कृतमाध्यमेन समीक्षा प्रस्तूयते। एतच्छोधकार्यं २०१४तमे ईसवीयाब्दे विद्यावारिधये श्रीमता चन्द्रप्रकाशउप्रेतीमहाभागेन प्रस्तुतम्। अस्य 'सर्वशुक्लोत्तरासमीक्षणम्' इत्येतच्छीर्षकेण ग्रन्थाकारं प्रकाशनं क्रियते।

श्रीशुक्लमवलम्ब्य दशाधिकविश्वविद्यालयेभ्यः शोधकर्तृभिः पीएच.डी. शोधोपाधिर्लब्धः। अत्र प्रकाशितयोः द्वयोः ग्रन्थयोः आरम्भतः २०१२पर्यन्तं प्रणीतानां शुक्लरचनानां संक्षिप्तः परिचयः समीक्षा च द्रष्टुं शक्येते। अतः परं श्रीशुक्लस्य 'आशाद्विशती' 'मम जननी' चेति कवितासंकलनद्वयं प्रकाशितम्। तत्र संकलितानां कासाञ्चन रचनानां विषये परिचयात्मिका अनुवादात्मिका वा सामग्री प्रथमे खण्डे लब्धुं शक्यते।

श्रीशुक्लस्य पञ्चाशद्वर्षपूर्तौ 'अभिराज'राजेन्द्रमिश्रवर्याणां प्रधानसम्पादकत्वे 'देववाणीसुवासः' इत्येतन्नामा पञ्चप्रसरात्मकः खण्डद्वयात्मकश्च अभिनन्दनग्रन्थः प्रकाशितोऽभूत्। तत्र अर्वाचीनसंस्कृतसाहित्यमवलम्ब्य पुष्कला सामग्री प्रकाशिताभूत्। श्रीहीरकप्राभृते श्रीशुक्लस्य व्यक्तित्वमवलम्ब्य विशिष्टसामग्री प्रस्तूयते।

कृतेऽपि प्रयत्ने भाषागतानां लिपिगतानां भावगतानां वा त्रुटीनाम् अत्यन्ताभावो न साक्षात्क्रियते चेत् तदर्थं सम्पादकमण्डलसदस्याः क्षन्तव्याः स्म सुधीभिः कृपालुभिश्च पाठकैः। श्रीहीरकप्राभृतं श्रीशुक्लस्य भवताञ्च करकमलेषु समपर्यन्ती आचार्यश्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितिः प्रमोदमनुभवति।

ग्रन्थस्य संरक्षकमण्डलस्य परामर्शदातृमण्डलस्य ग्रन्थसमर्पणसमारोह-मण्डलस्य स्वागतमण्डलस्य सम्पादकमण्डलस्य च सदस्याः, लेखदातारः अथ च ग्रन्थप्रकाशनकर्त्री देववाणी-परिषद् नूनं धन्यवादार्हास्सन्ति।

**विदुषां वशंवदः**

२४ दिसम्बर, २०१५

इच्छारामद्विवेदी

**(इच्छारामद्विवेदी, 'प्रणवः')**

प्रधानसम्पादकः,

आचार्यश्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितेः संयोजकश्च

'देववाणी-परिषद्, दिल्ली' ग्रन्थाङ्कः - १२७

# श्रीहीरकप्राभृतम्

(आचार्यश्रीरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थः)

(प्रथमखण्डः)

प्रधानसम्पादकः

आचार्य इच्छारामद्विवेदी 'प्रणवः'

सम्पादकः

डॉ. ऋषिराजपाठकः

प्रबन्धसम्पादकः

डॉ. चन्द्रमौलिशुक्लः

देववाणी-परिषद्, दिल्ली

आर ६, वाणी-विहारः,

नयी दिल्ली-११००५९ (भारतम्)

# श्रीहीरकप्राभृतम्

सम्पादकः : डॉ.ऋषिराजपाठकः

प्रकाशकः : देववाणी-परिषद्, दिल्ली
आर-६, वाणी विहारः, नई दिल्ली-११००५९
०११-२८५६१८४६, ०९५६०५३२३९२
devavanipd@gmail.com

मुद्रकः : मयूर एण्टरप्राइज़ेज़,
डब्ल्यू ज़ेड-३, तिहाड़ गाँव,
नई दिल्ली-११००१८

संस्करणम् : प्रथमम्, २०१५ ई०

मूल्यम् : एकसहस्ररूप्यकाणि (रु० १०००.००)



ISBN - 978-81-85924-23-6



**SHREEHEERAKPRABHRITAM**

**Editor** : Pathak, Dr. Rishiraj

**Publisher** : Devavani Parishad, Delhi
R-6, Vani Vihar, New Delhi-110059
(India). Phone : 011-28561846

**Printer** : Mayur Enterprises,
WZ-3, Tihar Village,
New Delhi-110018

**Edition** : First 2015

**Price** : Rupees One Thousand only Rs.1000.00

# विषयसूची

*क्र.सं. विषया:* *पृष्ठांका:*

## द्वितीयो भागः ०९७-१७८

### आचार्यरमाकान्तशुक्लस्य परिचयः साक्षात्कारश्च



## तृतीयो भागः

### आचार्यरमाकान्तशुक्लमवलम्ब्य लेखाः रचनाः स्मरणानि च १७९-५१६

महामहिमराष्ट्रपतिः श्रीप्रणबमुखर्जी
शिक्षा-साहित्य-क्षेत्रे उत्कृष्टयोगदानार्थम्
आचार्यरमाकान्तशुक्लाय
'पद्मश्री' सम्मानं समपर्यति।
(५. अप्रेल २०१३)

महामहिमराष्ट्रपतिः डॉ. प्रतिभादेवीसिंहपाटिलमहोदया
संस्कृतसाहित्यक्षेत्रे उत्कृष्टयोगदानार्थं
आचार्यश्रीरमाकान्तशुक्लाय
सम्मानप्रमाणपत्रं समर्पयति।
(६ मई २०११)

# कस्मै देवाय हविषा विधेम

**- आचार्य इच्छारामद्विवेदी, 'प्रणवः'**

**रमाकान्ताय, कान्ताय, लोककान्ताय नित्यशः।**
**यशःश्रीकाय शान्ताय, मत्काव्यगुरवे नमः॥**

अखिलब्रह्माण्डनायकस्य लीलापुरुषस्य श्रीकृष्णस्य परमेश्वरस्य कृपाकटाक्षच्छविभूतस्य मेघश्यामस्य सान्द्रघनध्वनिप्रसादवितरकस्य निखिलविद्या-श्रीक्रीडाभूमिभूतस्य विश्वविश्रुतस्य 'पद्मश्री'ति विरुदविभूषितस्य मत्काव्यगुरोः श्रीरमाकान्तशुक्लस्य तद्गुणानुवादसपर्याविधौ प्रकाश्यमानस्यास्याभिनन्दनग्रन्थस्य प्रकाशनावसरेऽत्र भवतां समेषां सुरगवीसमुपासकानां पादपद्मयोः समुल्लसन्तु प्रणवकवेर्मम द्विवेदिनः इच्छारामस्य प्रणतिततयः।

नेदमभिनन्दनं केवलं गुरुचरणानां श्रीरमाकान्तशुक्लमहाभागानामपितु समभिनन्दनमिदं समग्रायाः देववाणी-परिपाट्याः, सुरभारत्याः भारतीयशास्त्र-परम्परायाः भारतस्य सर्वेषां विदुषां शास्त्राचार्याणां, कविगुणालंकृतानां, रचनाकाराणां, संस्कृतसेविनां, संस्कृतपत्रकाराणां, तच्छिष्याणां विद्यार्थिनाञ्च।

विंशशताब्द्या एकविंशशताब्द्याश्च वर्तमानदशकं यावत् विगत-पञ्चाशद्वर्षेषु संस्कृतानुरागभूतस्य यदि कस्यचिदपि एकस्य महापुरुषस्य सुरम्या मूर्तिः हृदये स्फुरति तदा असौ महापुरुष एव हृदये जागर्ति। गुणानां खनिः, अवगुणानां द्वेष्टा, प्रयासानां शिखरं, कर्मणाम् औन्नत्यं, विदुषां मानः, कवीनां प्राणः, रचनाकाराणां प्रेरणा, नाट्यनिर्देशकानां सखा, समालोचकानां दृष्टिः यदि एकत्रैव कुत्रापि समुल्लसति तदा तत्रैव महापुरुषे।

नटवरनागरमिव घनश्यामोऽप्यसौ हृदये परमसितं शिवं प्रतिक्षणं स्मरति। मूर्त्तिमानयं विप्रधर्मः, साक्षात् प्रतिमेव सदाचारस्य, विशुद्धं निष्कामकर्म कर्तॄणाम्, गहनप्रेमा परेशस्य, परानुरक्तिरूप ईश्वरे, किमधिकं ब्रूमः यदि रत्नाकरः सिन्धुस्तदा गुणाकरः काव्यगुरुर्मे रमाकान्तः।

प्रायश्चत्वारिंशत् वर्षेभ्यः प्राक् मया लक्ष्मणपुरे दर्शनमस्य अवाप्तम्। तस्माद्दिनादारभ्य साम्प्रतं यावत् गुरुचरणानां वात्सल्यं मयि सुधाधारामिव प्रत्यहं वर्षति। अहं साक्षी वर्ते गुरोः परिश्रमस्य। संस्कृतानुरागी सुमहानयं

कल्पतरुः। विंशशताब्द्याः षष्ठे सप्तमे दशके युवकाल एव स्वकीयेन पुरुषार्थेन संस्कृतस्य यशोवर्द्धने संलग्नः आचार्यशुक्लः कस्य न प्रियः। तदानीं आकाशवाणीमाध्यमेन दूरदर्शनमाध्यमेन नाट्यप्रस्तुतिमाध्यमेन कविसम्मेलनानां समायोजनेन, पुनः शास्त्रचर्या-श्लोकपाठान्त्याक्षरी-कवितारचनादिव्यासङ्गेन समग्रे राजधानीनगरे तथा च समग्रे भारते किं च विश्वमण्डले अहर्निशं संस्कृतसेवनं, प्रचारः प्रसारश्च शुक्लमहाभागेन कृतः। तदानीं समये प्रतिमञ्चं दिल्ल्यां एकैव घोषणानेन क्रियते स्म दिल्ल्यां संस्कृताकादमी स्यादिति। डॉ. रामकरणशर्मा, डॉ. मण्डनमिश्रः, डॉ. सत्यव्रतशास्त्री, डॉ. सी.आर. स्वामिनाथन्, पी. के. थुंगनसदृशाः महापुरुषाः श्रीशुक्लमहाभागस्य संकल्पाय बहुसमर्थनं दत्तवन्तः। या संस्कृताकादमी अद्य दिल्ल्यां सर्वोत्कृष्टेन राजते सा शुक्लमहाभागस्य तपसः फलमित्यहं सम्यक् जानामि।

अर्वाचीनसंस्कृतमिति त्रैमासिकपत्रिकायाः प्रसारणे प्रकाशने कियद् दुःखमनेन सोढमिति साक्षित्वेन वर्तेऽहम्। लेखकानां रचनानां सम्पादनं, संशोधनं, हस्तलेखनं, अक्षरयोजनायाः संशोधनम् अथ च प्रकाशनाय कणकणयोजनेन धनव्यवस्था, मुद्रणं पश्चात् पत्रिकायाः प्रेषणं, विनैव मूल्यं दानमिति सर्वं संपाद्य सुदामा एव निष्कामभक्तः संस्कृतस्य संजातः आचार्यशुक्लः। गृहे मम भ्रातृजाया मातृकल्पा रमादेवी त्रयोऽपि पुत्राः मम सदृशाः शिष्याः यदापि समवेता भवन्ति स्म केवलं पत्रिकायाः कार्यम्, संस्कृतस्य वा श्लोकध्वनिः, शास्त्राणां वा चर्चा एव तत्रासीत्। अनेन पत्रिकामाध्यमेन शताधिकाः संस्कृतरचनाकाराः विद्वांसश्च संस्कृतक्षेत्रे विश्रुततां नीताः।

विश्वसंस्कृतसम्मेलनेषु अकादमीषु विश्वविद्यालयेषु राष्ट्रियशिक्षा-संस्थासु, जनसम्मर्देषु कविगोष्ठीषु शास्त्रसपर्यासु सर्वत्र समादरं लब्ध्वापि विनयशीलोऽयं महापुरुषः कदापि स्ववैमत्यं न प्राकाशयत्। किन्तु यदि संस्कृतस्य, तद्विदुषां च कुत्राप्यवमानोऽनेन दृष्टः सपद्येव तस्य निराकरणार्थं निष्पक्षतया स्वसमर्थनं प्रादात्। अभयः, सत्त्वसंशुद्धः, ज्ञानयोगव्यवस्थितः दैवीसंपद्गुणोपेतः आचार्यः शुक्लः सर्वेषामस्माकमभिनन्दनीयः। 'मम गुरुचरणाः आकल्पजीविनो भवेयुः' इत्येव निवेद्य विरमामि।

संयोजकः, आचार्यरमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमितिः।

धर्म की जय हो
प्राणियों में सद्भावना हो
गौहत्या बन्द हो

श्रीहरि:
हर हर महादेव
श्रीज्योतिरीश्वरो विजयते

अधर्म का नाश हो
विश्व का कल्याण हो
गौमाता की जय हो

उत्तराम्नाय श्रीमज्ज्योतिष्पीठाधीश्वर अनन्तश्री समलंकृत

**श्रीमज्जगद्गुरु शंकराचार्य स्वामी श्रीमाधवाश्रमजी महाराज**

शंकराचार्यमठ, नृसिंह मन्दिर मठस्थली, बदरीनाथ मार्ग, जोशीमठ, जिला चमोली, उत्तराखण्ड
पत्राचार हेतु पता : ७, शंकराचार्य मार्ग, सिविल लाइन्स, दिल्ली-११००५४ (दूरभाष: ०११-२३९१४५७९)
Phone : +91-11-23914579, +91-9810849047, Email : jyotishpeeth108@gmailcom

धर्मसम्राट् श्रीस्वामी करपात्रीजी महाराज की पावन स्मृति को सादर नमन एवं ज्योतिष्पीठाधीश्वर जगद्गुरु शंकराचार्य श्रीस्वामी माधवाश्रमजी महाराज का मङ्गलात्मक आशीर्वाद।

यह सुनकर जगद्गुरुजी महाराज अतीव प्रसन्न हुए कि संस्कृतवाक् के परमोपासक एवं काव्यशास्त्र व संस्कृतसाहित्य के विग्रहस्वरूप श्रीरमाकान्तशुक्लजी के ७५वें जन्मदिवस पर हीरक जयन्ती मनायी जा रही है। श्रीशुक्ल महोदय पूज्यपाद जगद्गुरुजी महाराज के परमस्नेहास्पद तथा सभी विद्वानों के गुरुप्रभृति महापुरुष हैं। भगवान् श्रीबद्रीनारायणजी के कृपाप्रसाद तथा भगवान् शंकराचार्यजी के प्रसाद से श्रीशुक्लजी संस्कृत सेवा में निष्ठ रहें। आपकी सुखद दीर्घायुष्य की पवित्र भावना है। नारायणस्मृति ।।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

भवदीय-
निजी-सचिव
(ज०शंकराचार्य, ज्योतिष्पीठ)
०९०४१५७७७११

कार्तिक कृष्ण पञ्चमी, २०७२ विक्रमी
(तदनुसारं शनिवार ३१/१०/२०१५)
चण्डीगढ

●

॥ श्रीहरिः ॥

॥ श्रीधर्मसम्राट् विजयते ॥

श्रीमतामनन्तानन्तगुणगणगरिष्ठानां सर्वविधविद्याविद्योतितान्तःकरणानां विद्वद्गणवरिष्ठानां सर्वतन्त्रस्वतन्त्राणां नवरसरुचिरवाग्विलासविशिष्टानां कविराजराजानामाचार्य**श्रीरमाकान्तशुक्ल**वर्याणां **हीरकजयन्ती**त्युत्सवोपलक्ष्ये तेषामेवानन्दप्रदयोः करकमलयोः सादरमर्प्यते एषः **त्र्यम्बकेश्वरश्चैतन्यः**।

**महायोगी विज्ञो विबुधजनवन्द्यः श्रुतिधरः**
**कृपामूर्तिस्सौम्यो नवरससरः काव्यरसिकः।**
**भुवि प्रख्यातो यः कवनकुशलो लोकविरतः,**
**रमाकान्तो दान्तः कविकुलमणिर्वै विजयते॥**

# ॥ श्रीरमाकान्तशुक्लपञ्चकम् ॥

**भारते भारतीभासको भावुको भव्यतापादको भूतिसौभाग्यदः।**
**सर्वदा सर्वदा शारदाराधकः श्रीरमाकान्तशुक्लः कवी राजताम्॥१॥**
**सत्यसौशील्यसौगन्ध्यशोभाकरः शौचसंतोषवैराग्यभक्तिप्रियः।**
**भावनाराधनासाधनाभूषितः श्रीरमाकान्तशुक्लः सुधीः राजताम्॥२॥**
**संस्कृताराधकः संस्कृतेः साधकः काव्यगङ्गाप्रवाहप्रभाभासितः।**
**यस्य कीर्तिध्वजो धार्यते दिग्गजैः श्रीरमाकान्तशुक्लो गुरू राजताम्॥३॥**
**देशदेशान्तरे काव्यपाठाय वै याति पीयूषकुम्भं गृहीत्वा सदा।**
**विप्रवंशावतंसान्तरङ्गानुगः श्रीरमाकान्तशुक्लो द्विजो राजताम्॥४॥**
**चिन्तने देवताचार्यचित्तप्रभः देवराजोपमो दिव्यतादर्शकः।**
**दुःखदौर्भाग्यहीनो दयासागरः श्रीरमाकान्तशुक्लः शिवो राजताम्॥५॥**
**करोति भावशुद्धो हि त्र्यम्बकः साधुसेवकः।**
**स्रग्विणीवृत्तमध्ये च श्रीरमाकान्तपञ्चकम्॥**

**( समर्थश्रीत्र्यम्बकेश्वरश्चैतन्यः )**

●

ॐ

**Prof. Ramkaran Sharma**
(President Awardee Govt. of India)
**Visiting Professor of Sanskrit**
University of Pennsylvania
Email: ramkaransharma@yahoo.com
63, Vigyan Vihar, Delhi-110092
India : 011-43043476
USA : 0012015658483

Ex Joint Educational Advisor
(Min. of HRD Govt. of India)
Ex Director, Rashtriya Sanskrit Sansthan
**EX Vice Chancellor**
K.S.D.Sans. University, darbhanga &
S.S.University, Varanasi
Ex President IASS
**Ex Visiting Professor**
Columbia University, University of Chicago,
University of California Berkeley

# शुभाशिषः

6.11.2015

महानेष आनन्दस्य विषयो यत् पद्मश्रीरित्युपाधिं सम्मान्यं दधतां परमादरणीयानामाचार्य**श्रीरमाकान्तशुक्ल**महोदयानां **हीरकजयन्ती**मुपलक्ष्य तेभ्योऽभिनन्दनग्रन्थ एष पाण्डित्यमयः समर्प्यते तदीयैर्बन्धुभिर्विद्वन्मानसमरालैः।

जयत्येष कनकपद्मश्री'**मृदुः प्रकृत्या च ससार एव च**' पूरयताच्च विंशत्युत्तरं शततमं '**देवहितमायु**'रिति साधयतात् भगवान् भूतभावनः। स्फीतायतिः सपरिवारः स्तादेष विद्वत्कविशिरोमणिः सर्वशुक्लाऽऽराधकःशुक्लः।

- इति प्रार्थयते रामकरणशर्मा

**भाति मे भारतं तद् यशस्वी यतो मारकान्तो रमाकान्त आस्ते सुधीः।**
**भ्राजते भारती नैर्जरी निर्जरा वर्धतां भारती वर्धतां भारतम्॥**

**मारकान्तश्रियं बिभ्रद् रमाकान्तो विचक्षणः।**
**पद्मश्रियं दधानोऽयं जीवताच्छरदां शतम्॥**

**भारतं शोभयन् देववाणीश्रिया शोभयन् देववाणीं स्वकाव्यश्रिया।**
**शोभयंश्चापि काव्यं प्रसादश्रिया शोभतामेष पद्मश्रियं सन्दधत्॥**

रामकरण शर्मा

**Jnanpith Laureate**
**Mahamahopadhyaya Vidyavachaspati Vidyamartanda**
**Prof. Dr. Satya Vrat Shastri**

Recipient of Padma Bhushan, Padma Shri & President of India Certificate of Honour
Honorary Professor, Special Centre for Sanskrit Studies
Jawaharlal Nehru University
Formerly Professor and Head, Department of Sanskrit
University of Delhi
Ex-Vice-Chancellor,
Shri Jagannath Sanskrit University, Puri (Orissa)

Res. : C-248, Defence Colony,
New Delhi - 110 024
E-mail : satyavratshastri@airtelmail.in
Website : satyavrat-shastri.net
Ph. : 24336644, 24336631
Mobile : 96501 17463

# अभिनन्दनम्

सुप्रथितयशसां कविसहृदयानां डॉ. रमाकान्तशुक्लमहाभागानां हीरकजयन्त्यवसरे हीरकजयन्त्यभिनन्दनग्रन्थो हीरकप्राभृतमितिनामधेयः प्रकाश्यत इति परमो मे प्रमोदः। अर्वाचीनसंस्कृतपत्रिकामाध्यमेन नाना दशकान्येभिः समेधितं संस्कृतवाङ्मयम्। विरचितान्येभिर्नाना संस्कृतमहाकाव्यानि। गीतं च नैकशो मधुरकण्ठेन 'भाति मे भारतमि'ति काव्यं प्रवाहिता येन सहृदयेषु रसझरी। कविगोष्ठीष्वेषामुपस्थितिरुत्सव इव। यावज्जीवमेभिः समुपासिता भगवती वाचां देवी। संस्कृतजगति हीरकायमाणा इमे पुरुषायुषं लभन्तां यशश्च हस्तावचेयमिति प्रार्थयेऽहं भगवन्तं शङ्करं लोकशङ्करम्।

नवरात्रचतुर्थी
१६.१०.२०१५

सुरसरस्वतीसमाराधनैकव्रतः
सत्यव्रतः शास्त्री

**महामहोपाध्याय आचार्यरेवाप्रसादद्विवेदी**
राष्ट्रपतिसम्मानितः संस्कृतविद्वान्,
पूर्वाचार्याध्यक्षः प्राच्यविद्याविभागः
का.हि.वि.वि.
प्रोफेसर इमेरिटस (संस्कृत)
का.हि.वि.वि. वाराणसी

कालिदाससंस्थानम्,
२८ महामनापुरी,
वाराणसी-२२१००५
फोन - ०५४२-२५७०६८ल

॥ श्रीः॥

(१)

शुक्लवंशावतंसस्य पद्मश्रीरमाकान्तमहाशयस्य
वयसः पञ्चसप्ततिं प्राप्तस्य कृते सनातनीयाः

# शुभाशंसाः

**ब्रह्मानन्दमहाकवेर्बुधमणेः शुक्लस्य यो वै वपु-**
**ष्मत्तायामुपमानतीर्णमहिमा केनोपमीयेत सः।**
**पुत्राणामपि कर्मठत्वमुपमातीतायते यस्य वा**
**अर्वाचीनतमस्य संस्कृतवचो विश्वस्य सम्वर्धने॥१॥**

**आनन्दवर्धनवरस्य सुतस्य शक्त्या**
**भक्त्या च योऽखिलविधानविधिप्रधानः।**
**राष्ट्रप्रधानमहितप्रणवप्रवीणैः ,**
**'पद्मश्रिया' स यदि भूषित औचिती सा॥२॥**

**हिन्दीति यास्ति भणितिः प्रचुरार्थशक्त्या**
**संवर्धिताऽस्ति भरतावनिराष्ट्रभाषा।**
**तत्रापि योऽसदृशविज्ञवरस्तमेतं**
**दृष्ट्वा स्मरामि विबुधं तु हजारिवर्यम्॥३॥**

( हजारी- डॉ. हजारी प्रसाद द्विवेदी)

**श्रीराममूर्तिरिति कश्चन काव्यशास्त्रा-**
**चार्यो बभूव किल हिन्दिपदप्रधानः।**
**तं स्वर्गतावपि यदि स्मरयन्ति धीराः**
**शुक्ला इमे हि ननु ते शतकत्रिपादाः॥४॥**

**धन्या खुरजाधरणिर्यस्यां वासो गिरां देव्याः।**
**ब्रह्मानन्दसदृक्षाः वसन्ति यस्यां विदां वर्याः/महाकवयः॥५॥**

उमाकान्तः शुक्लो जयति सहकान्तः कृतपदो
ब्रिटैन्यामप्युच्चैः सुरगिरि च हिन्द्यां च सदृशम्।
यदीयं गैर्वाणीकवनगरिमाणं दिशि दिशि
प्रशंसन्ते मुक्तस्वरमपि महान्तोऽपि कवयः॥६॥

पुण्यं यत् समुपार्जितं सुरगिरां सम्यक् सपर्याध्वरैः
सर्वैः शुक्लकुलाङ्कुरैः सह रमाकान्तैः सपुत्रोत्तमैः।
तस्याख्यापन-पद्मबन्धचतुराः के, ये न रत्नाकराः,
ये वा हीरसुता न नैषधकृतो भूमौ गिरां लासकाः॥७॥

रमादेवी वन्द्या भवति खलु यस्याः पतिवरो
रमाकान्तोऽन्वर्थः कविरथ कृती संस्कृतरतः।
पृथिव्यामर्धाङ्गी भवतु दयिता कोषकुहरे
दृशोराध्यक्ष्ये सा भवति तु रमाकान्तदयिता॥८॥

न वृत्तिर्यस्यास्ते सुरवचसि तत्रापि निरति-
र्नितान्तं गैर्वाण्यामिह जगति सादृश्यरहिता।
यदीये वाग्देवीग्रथितशतके 'भारतमही-
स्वरूपालेख्ये' नः प्रतिफलति वै भारतमही॥९॥

मातुः प्रियम्वदाया वन्द्यः कुक्षी, रमाकान्तः।
विद्वद्वर्यो यस्मिन्नलब्ध जन्मोत्तमं सुकृती॥१०॥

भास्कराचार्यवर्यस्य मारकान्तः सनातने।
रमाकान्तः सदैव स्याद् ब्राह्मीमातुः स्तनन्धयः॥११॥

पादोनशतवार्षिक्यं पूरयित्वाऽभिपूरयेत्।
शरदां शतकं कालचक्रेऽनुल्लङ्घ्यशासने॥१२॥

आशंसेऽहं वपुषि विपुलाः श्रीरमाकान्तशुक्लाः
बुद्धौ कण्ठे सदृशसुषमाः संस्कृतप्राणभूताः।
भूयादेषां धरणिविबुधप्राग्रणीनामशीतिः
प्रत्यक्पादा भवतु च वयो विंशतिद्वन्द्वतुल्यम्॥१३॥

सनातनः श्रीरेवाप्रसादो द्विवेदी
श्रीसदाशिवकुमारो द्विवेदी

●

(२)

ऐषमः संस्कृतवाङ्मयस्य महत्तमायै सेवायै भारतराष्ट्रपतिभिः
स्वतन्त्रदिवसपर्वणि सम्मानितानां कविश्रेष्ठानां

## डॉ.रमाकान्तशुक्लानां

# स्वस्तिवाकाः

श्रीरमाकान्तशुक्लेभ्यः स्वस्तिवाचः सनातनाः।
वर्धापनसहस्राणि सम्माना[१]याऽर्पयामहे॥

प्रत्नं प्रत्न[२]तरेष्वपि क्षितितले यत् संस्कृतं वाङ्मयं
तत्सातन्त्यसमुद्धये प्रचलिते सेवाऽध्वरे दीक्षितान्।
ब्रह्मानन्द इति श्रुतान् कविवरान् कापोतिकीं हस्तयो-
र्धृत्वा मूर्ध्नि नमामि तत्सुतवरान् स्मृत्वा च नन्दाम्यहम्॥१॥

तेषां सत्तनयाः सदारतनयाः श्रीविष्णुकान्ता उमा-
कान्ताः किञ्च रमा[३]युताः सुकवयः कान्तोत्तराः सन्ततम्।
सेवायै प्रियताजुषे, सुरगवी-क्षेत्रे परं विश्रुताः
सर्वेऽप्येव सनातने मयि दृशं प्रीतां दधुः सर्वदा॥२॥

अर्वाचीन[४]तमापि संस्कृतगवी स्वं सार्वभौमं यशो
नैरन्तर्यशुभं समस्तपृथिवीगात्रेऽस्ति संतन्वती।
वागेषा कवितल्लजस्य हृदयोद्गारस्तमः सन्ततिं
चन्द्रोद्योत इवाऽद्य शामयति तं स्तुत्यं हि मन्यामहे॥३॥

धर्मः कः? प्रथितिं य एति[५] निखिलास्वाशासु पुत्रोत्तमैः
पौत्रैश्चापि महर्षितामिव गतैरत्युज्ज्वलैः कर्मभिः।
सोऽयं कोकिलकण्ठगीतकविता रम्यो रमाकान्त इ-
त्याख्यः पण्डिततल्लजो भवति वै दृष्टान्त उद्यद्द्युतिः॥४॥

'भूतले भाति मेऽनारतं भारतम्'
सूक्तिमेतां कवित्वेन यो योजयन्।
भारतीयां समृद्धिं पुराणीं यथा
वर्तमानां पुरः स्थापयत्यञ्जसा॥५॥

यो हि षष्टिं प्रपूर्याऽपि कान्तो युवा /कायोत्तमी
राजतेऽद्यापि यूनां वरः सुस्वरः।
श्रीरमाकान्तशुक्लः सदा राजता-
मेवमेवाप्तसम्मानलक्षाधिकः॥६॥

१५.०८.२००९
San Francisco
Red wood city
U.S.A

●

१.राष्ट्रपतिपुरस्काराय
२.प्रत्नतरेषु ग्रीसदेशादिषु होमरादीनां वाङ्मयेषु प्रत्नः, तेभ्योऽपीति भावः
३.रमायुताः कान्ताः रमाकान्ताः। एते त्रयोऽपि भ्रातरः संस्कृतकवयः।
४.अर्वाचीनसंस्कृतमिति नियमितप्रकाशा पत्रिका
५.ध्रियत इति

राष्ट्रपति-सम्मानित
**प्रो. अभिराज राजेन्द्रमिश्र**
पूर्वकुलपति

दूरभाष : ०१७७-६५३४६०७
मोबाइल:०९४१८१-७६९६८, ०९२१८५-३४६०७
दिनाङ्क २३.१०.२०१५

# नान्दीवाक्

यह जानकर हार्दिक उल्लास हुआ कि हमारे 'भाईजी' आचार्य रमाकान्तशुक्ल की ७५ वीं वर्षगाँठ के अवसर पर उनका नागरिक तथा सारस्वत अभिनन्दन सम्पन्न हो रहा है। पद्मश्री डॉ. रमाकान्तशुक्ल जी हमारी पीढ़ी के पथ प्रदर्शक रहे हैं। उनका सान्निध्य, वर्तमान मानकों के स्तर पर - धर्म, अर्थ, काम एवं मोक्ष - चारों पुरुषार्थों का साधक रहा है, उनके लिये भी तथा उनके अनुगतों के लिये भी;

मैं उनका दुर्ललित अनुज रहा। अत एव सदैव उनकी समीक्षा - 'कच्ची-पक्की' दोनों ही शैलियों में करता रहा हूँ। आश्चर्य है कि भाई जी ने राजहंस की तरह केवल पक्का-अंश (क्षीर) ही ग्रहण किया। आज भी उसी लहजे में कुछ लिख रहा हूँ।

**रथात्संवादमादाय भास्करान्मञ्चकौशलम्।**
**वल्लभाद्रसमाहृत्य राजेन्द्राद् गीतिमेव च॥**
**मोहयन् पामरांश्चापि भातिभारतकीर्तनैः।**
**जयत्यहो रमाकान्तः सुकविस्सार्ववर्णिकः॥**
**स्रग्विणी स्रग्विणी जाता भारतञ्चापि भारतम्।**
**एकेनैव हि काव्येन यस्य जातो जगज्जयः॥**
**शतायुष्यं नु निर्विघ्नं नीरोगञ्च वृणोत्वसौ।**
**अस्माकं भ्रातृजायायाः स हि सौभाग्यभास्करः॥**
**नित्यस्मेरमुखो विद्वान् सुखदुःखोभये समः।**
**जीव्यादस्माकमादर्शो भूतलेऽस्मिन् शतं समाः॥**

**- मिश्रोऽभिराजराजेन्द्रः**

२३. १०. २०१५

●

अध्यक्षा
महामहोपाध्याया आचार्या दीक्षितपुष्पा
पाणिनिशोधसंस्थानम्
राष्ट्रपतिसम्मानिता संस्कृतविदुषी,
बिलासपुरम् (छ.ग.)

# विदुषां मनःसु स रमाकान्तो विचाकाश्यताम्

जगत्यामस्याङ्कदाचित्कुत्रचित् कञ्चिज्जनयतः पितरौ प्राक्तनपुण्योपचयेन, यस्य जन्मनः समकालमेव विश्वमिदमलोकसामान्यप्रकाशपरिपूरितं सन्मोदयति विश्वम्भरां भगवतीं प्रकृतिमानन्दयति च जीवनिकायं चतुर्विधम्।

तादृशा एव परमसम्मान्याः, विद्वद्वदान्याः, सरलहृदयाः, समुदितदया विविधशास्त्रज्ञानविताना, वर्धितमानाः, मैरवीं महोन्नतिं, भासनीं च तैजसीं शक्तिं बिभ्राणा, विलोकयतामन्तःकरणेषु प्रसह्य समाधियोगं भावयमानाः, पूर्वजन्मार्जितपुण्योदयेन ब्राह्मं तेजो दधाना, भगवत्पादरजोभिषेकैरात्मानं पुनानाः, श्रीकृष्णचन्द्रचरणारविन्दमकरन्दसुधारसपानेऽनारतं मोदमाना, विदुषां समवायेनाहर्निशं सेव्यमानाः, शास्त्ररक्षणमेव राष्ट्ररक्षणस्य श्रेष्ठतमं पन्थानं मन्वानास्तदर्थं च भूयो भूयो यतमाना, नभसि विवस्वानिव विद्वन्मण्डले प्रकाशमानाः, सुमनःस्वामोद इव, पयःसु माधुर्यमिव, जलेषु शैत्यमिव, सतां हृदयेषु पास्पन्द्यमाना, घनरसितगभीरया स्तिमिताम्भोधिनादकल्पया गिरा सहृदयानां हृदयेषु हठान्निविशमाना, लोकानां जागरणाय, गीर्वाणवाण्याश्च संरक्षणाय जीवनं क्षपयमाणा अत्र भवन्तो भगवत्कृपयायुषः पञ्चसप्ततिवर्षाणि कृतार्थीकृतवन्त, इत्यस्माकं सर्वेषां मनांसि हर्षातिरेकैः स्फीतीभवन्ति।

जायन्ते च म्रियन्ते च पृथिव्यामनेकमानवाः, परं धरेयं सर्वैर्जननीपदं नालंकरोति। येन जातेन कुलं, ग्रामो, राष्ट्रं, मानवता च समुन्नीयन्ते, तस्यैव जन्म सार्थकतां बिभर्ति। धन्यतामापन्नेयं भूमिर्भारतस्य सुतमेवंगुणोपेतं प्रसूय, यः स्वमानसे भारतविषयिणीमेव हितैषितां कलयति। अद्य धरेयमस्मदीया वैदेशिकसभ्यतयाक्रम्यमाणा रोरुदीति, भारतीयाश्च तस्याः क्रन्दनं शृण्वन्तोऽपि न शृण्वन्ति। दुरवस्थां च तदीयां पश्यन्तोऽपि न पश्यन्ति। अतः करालेऽस्मिन् कलौ कटुकोलाहलाक्रान्ते, राष्ट्रे चाधुनिकशिक्षाचाकचक्येन विभ्रान्ते, कामाग्निना

दन्दह्यमाने जनानामन्तरतमेऽपि प्रान्ते, स्वाभ्युदयचिन्ताविमुखजनौघे च भुक्तोज्झितविषयभोगपूगेष्वश्रान्ते, यः कश्चिद् यतते वेदादिशास्त्राणां रक्षणाय, देववाण्याश्च स्थापनाय, स एवास्माकं नमस्यः।

सत्यव्रताचरणेन पूतमानसानां, प्रदीप्तज्ञानरविणा विदूरीकृताज्ञानस्तोमानां, परोपकारमन्दाकिन्यां गाहं गाहं धौताखिलकल्मषाणां स्वतःप्रकाशितगुणगणैः प्रसृतयशोवितानानां, संन्यस्तदैन्यव्यतिकरनिवहानां, स्वीयैर्गुणगणैः सर्वेषां हृदयानि समुत्तुङ्गतरङ्गं विदधतां, स्वानुष्ठितकर्मभिर्मनुसन्ततिं समुन्नयतामन्यदीय-कल्याणमेवाजस्रं चिन्तयतां, त्रिभुवनमेव स्वगृहं भावयतामुदाराशयानां, विपत्पराहतानां दीनानां दुःखोष्मणा नवनीतपिण्डवद् द्रवीभवतां, लोकोत्तर-वशीकरणशक्तिपाशेन बुधजनानां चेतांस्याकर्षयतां, चराचरे जगत्यात्मस्वरूपं पश्यतां, परदुःखेन दुख्यतां, परसुखेन च सुख्यतां, सदयहृदयानां, भवादृशानामेव हृदयं विदीर्य निःसरत्यनारतप्रवाहा कविझरी, यत्र च प्रतिबिम्बन्ति गौरवं राष्ट्रस्य, दुर्गतिश्च साम्प्रतिकी, चित्राणि च भूतभव्यभविष्यताम्। उदेति च प्रबोधोऽपैति च दीनता, उपैति चोत्साहः, परैति च दुरोदरा मदमहाशक्तिः अत्येति च महामोहान्धन्तमः उच्छिद्यन्ते च दुःखपरम्परा निलीयन्ते च चित्तस्य बाधिका शक्तयो चोद्यमाय महास्फारावकाशा, जन्यते च संस्कृतस्य विस्ताराय महती यियतिषा।

व्यूढोरस्कः, पीनांसः, सुललितवपुः स्निग्धवर्णः, शुभाङ्गः, सुभालो, नीतिमान्, वाग्मी, चारित्रेण संयुक्तः, हितवाक्, मितवाक्, सत्यवाक्, अन्तःशीतलो, विद्वत्सत्तमो, दुर्धर्षतेजा, अनभिभवनीयो, भागवतधर्मे रतो, गीर्वाग्वाणीसंरक्षकः दिग्विश्रुतैः काव्यैर्महतीं ख्यातिमुपागत इति विदुषां मनःसु रभसा प्रविष्टस्य यस्य गेहे चञ्चलापि श्रीर्निश्चलावतिष्ठति, यश्च शास्त्रेषु कृतभूरिश्रमान्, पण्डितान् सम्मान्य भारतीयतां संरक्षति, यस्य धर्मनिष्ठा विराजते हिमाद्रिशृङ्गेषु, धीरता चातिक्रामति जलधितलम्, क्षमा च यस्य धरणीनिभा, धर्मगतिश्च यस्य मरुत्सदृशी, यश्चादिशङ्कराचार्य इव सनातनधर्मप्रतिष्ठायायश्रान्तो विस्मृतसंस्कारां विगतशीलां भारतजनतां दुरितापहारकैः मेघध्वानगभीरैः कविताध्वानैरान्दोलयत्येकत्वेन च समायोजयति, भारतमखण्डं विधातुं प्रयस्यति, गुणगणस्तदीयो भारतराष्ट्रस्योन्नयने व्यापरीपरीतु। कीर्तिश्च तस्य दिगन्तेषु प्रसरीसरीतु, यशःपताका चागगनान्तं दोधवीतु।

पश्यतु भवान्, यद् भवतः संश्रयं संप्राप्य गौरवं यस्या वरीवृधितः, सेयं भवद्भिर्गाढमालिङ्गितापि, सर्वसौन्दर्यसुभगा, संकल्पजालवलिता, त्रिकालकलनाशता अनन्तभुवनाभोगा, परामृष्टत्रिकाला, सर्वाशाकोशविश्रान्ता तन्त्रीनादझङ्कृतिसमाकारा, सर्वप्राकाश्यदीपिका सर्वभावगता, गुञ्जिताशेष-दिक्कुञ्जा, कलकलनिनादिनी जाह्नवीव गौरगुरोरासेतोः प्रवहन्ती, सहृदयानां चित्तभूमिषु जोगुञ्जती, नरीनृत्यती वावल्गतीव, कविताकामिनी भवदीया जरिहर्ति मनांस्यन्यदीयानीति?

इह खलु क्रियाकारकफलस्वभावविलक्षणे जगति, द्वे शक्ती विद्येते, ज्ञानशक्तिः क्रियाशक्तिश्च। यथोदिते विवस्वति नंक्ष्यत्येवान्धकारस्तथैव भवदीया ज्ञानशक्तिक्रियाशक्त्यन्विता कविता राष्ट्रस्य दुर्गतिं नाशयिष्यत्येवेति नास्ति संशीतिलेशः। अद्यानवलम्बा या वर्तमानशिक्षा बंभ्रमीति कान्दिशीका, तत्कृते भवन्मेधा सन्मार्गं व्यवस्थापयिष्यति, देशे खलु चिराद् विनष्टां लुप्तां च विद्यापरम्परां पुनः स्थापयिष्यतीत्याशासेऽहं, आशासते च मादृशा राष्ट्रचिन्ताकुला बहवोऽपि।

इदं च भूयोऽपि भवत्कृते-

**पुण्यैः पूर्वसमर्जितैः प्रभवति प्रज्ञावती सन्तति-**
**श्चित्तेनेति विचार्य सुष्ठु पितरौ तीक्ष्णे तपस्यास्थितौ।**
**कालेनातिकृशौ समाहितमती सन्तोष्य भक्त्या हरिं**
**त्रिंशल्लक्षणवन्तमापतुरिमं सूनुं बुधां सम्मतम्॥१॥**

**आचार्यान् समुपास्य शास्त्रमहितान् विद्याः समाराधिता**
**ग्रन्थे भागवताभिधे सुमहिते प्रौढिः समासादिता॥**
**त्वं लोकस्य विभूषणो बुधवरो वेदान्तराद्धान्तविद्**
**त्वामेव प्रतियान्ति धर्मनिकरा नद्यो यथाब्धिं प्रति॥२॥**

**सोल्लासेन सकौतुकेन विहितध्यानेन हर्षेण च**
**स्वाध्यायेन समर्जितेन तपसा यो वेधसा निर्मितः।**
**यस्यास्ते च निरर्गला गतिरहो शास्त्रेषु काव्येषु च**
**तस्मिन् पण्डिततल्लजे त्वयि गिरा साक्षाद् विराराज्यते॥३॥**

राष्ट्रस्याधुनिकीं स्थितिं भयकरीमालोक्य पीडाकरी-
मन्तर्म्लानियुतो निराकृतिविधौ जाग्लायसे भूरिशः।
अस्मादेव वितीर्य नव्यरचना आन्दोलनाय क्षमा
यूनां सुप्तमनःसु क्रान्तिघटनाबीजं त्वया रोपितम्॥४॥

शूराः सन्ति सहस्रशः सुचरितैः पूर्णं जगत् पण्डितैः
संख्या नास्ति कलावतां बहुतरैः शान्तैः प्रपूर्णं वनम्।
शास्त्रव्यूहचरा भ्रमन्ति बहुशो वाचां विताने क्षमाः
सर्वानप्यतिशाय्य काव्यकलने स त्वं प्रबोभूयसे॥५॥

केकी ह्रीच्छति कोकिलो मदरतो मौनं समालम्बते
यस्मिन् काव्यसुधारसं वितरति प्रावृट्सु धाराधरे।
कामाचाररता च येन जनता धर्मेण संयोजिता
काव्यैः स्वैः विदुषां मनःसु स रमाकान्तो विचाकाश्यताम्॥६॥

पुष्पादीक्षितया कृता नुतिरियं गीर्वाणवाग्गुम्फिता
तेजःसिद्धिमनेकधा वितरतात् सत्यप्रतिष्ठाय ते।
जीव्याः पूर्णवयोऽप्यतोऽधिकतरं विद्वज्जनान् प्रीणयन्
वामाङ्गे लसतात् रमा श्रुतिमयी या शक्तिभूतास्ति ते॥७॥

●

21, Land mark city,
(Near Bhel Sangam Society
Bhopal-462 026
Mb. 9589341808, 9999836088
Land Line - 0755- 4004158

**प्रो. राधावल्लभ त्रिपाठी**
भू. पू. प्रोफेसर तथा अध्यक्ष
संस्कृत विभाग
डॉ.हरिसिंह गौर विश्वविद्यालय
सागर, मध्य प्रदेश
भू. पू. कुलपतिः,
राष्ट्रियसंस्कृतसंस्थानम्

# विजयते श्रीमद्रमावल्लभः

**यस्य श्रीश्च सरस्वती च युगपत् सिद्धे स्वतो भास्वरे**
**कार्मण्यं भुवि यस्य साधु सुतरां साधोश्च जेगीयते।**
**सौन्दर्येण समन्वितो रसमयो रम्योज्ज्वलः सर्वतः**
**पद्मश्रीसुविभूषितो विजयते श्रीमद्रमावल्लभः॥**

●

**Prof. Ramanuja DEVANATHAN**
PRINCIPAL

**RASHTRIYA SANSKRIT SANSTHAN**
Deemed to be University
Under MHRD, Govt. Of India
Accredited by NAAC with 'A' Grade

**SHRI RANBIR CAMPUS, KOT-BHALWAL, JAMMU-181122 (Jammu & Kasmir)**

# नन्द्याच्छुक्लो रमाकान्तः

रमाकान्तशुक्लो ध्वनी रमाकान्तशुक्लो मणिः।
रमाकान्तशुक्लो गुणी रमाकान्तशुक्लो धनी॥१॥
रमाकान्तो रमाकरः सभाकान्तो गुणाकरः।
विदां कान्तो बुधाकरः सुधाकान्तो मुदाकरः॥२॥
कान्तस्त्वं च नरोत्तमो गुणनिधिर्बुधोत्तमः।
सभ्यः शिष्टकलोत्तमो रसवरस्सुरोत्तमः॥३॥
भूसुरेष्विह भवान् सङ्कल्पसिद्धः भासुरेष्विह भवान् प्रागल्भसिद्धः।
वाग्भटेष्विह भवान् वाक्कल्पसिद्धः वाङ्मयेष्विह भवान् भाकल्पसिद्धः॥४॥
वन्दे कान्तं रमाकान्तं भाषे काव्यं महाकाव्यम्।
नौमि प्राचं कविप्राचं स्तौमि प्राज्ञं गुरुप्राज्ञम्॥५।
भाति मे भारतं यस्य भाति नो भारते तस्य।
कीर्तिरितावती यस्य कीर्तिरैतावदी तस्य॥६॥
देववाण्याः परिषदः देववाणीं समवितुम्।
भारतीये मुखपुरे प्रत्यतिष्ठत् शुभवचः॥७॥
लोकभाषा देवभाषा द्वे च भाषे ते ह्यधीने।
देवभाषां लोकभाषां कर्तुकामस्तेऽस्तु यत्नः॥८॥
विभूषितपद्मश्री राजतां ते च शास्त्रं सुभूषितराष्ट्रश्री राजते त्वां च वृत्वा।
सुवर्धितशास्त्रश्री रज्यतां ते च बुद्धौ प्रवर्धितसम्पच्छ्री रज्यतां ते च गेहम्॥९॥
नन्द्यात् शुक्लो रमाकान्तः जीव्यात् दीर्घः सपत्नीकः।
भूयात् कीर्त्या समाक्रान्तः रक्षेद् देवो गृहे सर्वान्॥१०॥

(रामानुजदेवनाथः)

द्यण

य ण –

# संस्कृतस्य परिचर्या

## पद्मश्रीविभूषिताचार्यरमाकान्तशुक्लः

पुरा काले मण्डनमिश्रस्य गृहविषये पृष्टेन केनापि जनेन भणितम्–

**स्वतः प्रमाणं परतः प्रमाणं**
**कीराङ्गना यत्र गिरो गिरन्ति।**
**द्वारस्थनीडान्तरसन्निरुद्धाः**
**अवेहि तन्मण्डनमिश्रधाम॥**

एतस्य रीतौ यदि कश्चित् आचार्यस्य रमाकान्तशुक्लस्य गृहविषये पृच्छेत् तदा एतदेव उत्तरं श्रोष्यते–

**मन्त्रघोषः श्लोकपाठः संस्कृतं यत्र श्रूयते।**
**नि श्चयेन तदेव स्याद् रमाकान्तनिकेतनम्॥**

अस्ति प्रसिद्धा अभिख्या यद् उत्सवप्रियाः ब्राह्मणाः इति शुक्लमहोदयस्तु वसिष्ठगोत्रीयः उच्चब्राह्मणवंशावतंसः। तस्य गृहे प्रतिदिनम् उत्सवः प्रचलति। अद्य पण्डिराजीयं अभिनीयते, ह्यः बालकानां श्लोकोच्चारणप्रतियोगिता आसीत्, श्वः देववाणीपरिषदा वार्षिकोत्सवः आयोजयिष्यते। तस्य गृहे यः कोऽपि आयाति तेन संस्कृतेन जीवितव्यम् एव। कश्चन चिकित्सकः वा आयातु, अभियन्ता वा बैंकप्रबन्धकः अन्य यः कोपि वा आयातु तेन संस्कृतस्य कश्चन श्लोकः श्रावयितव्य एव। अहं तु उपहसामि यत् यदि वायुः अपि शुक्लमहोदयस्य पार्श्वतः सरेत् तदा तमपि शुक्लवर्यः वक्ष्यति भो भो संस्कृते किमपि प्रसङ्गं श्लोकं वा श्रावयित्वा गच्छ। अयं महोदयः सर्वान् सदा संस्कृते जीवितुम् प्रेरयति। महान् अयं कविः। अस्य जीवनकाले एव तस्य रचना विशेषतः **'भाति मे भारतम्'** इति इयं विद्यालयेषु च बालानां पाठ्यपुस्तकेषु पाठ्यते।

देशे विदेशेषु च अयं स्ववैदुष्यपूर्णानि व्याख्यानानि लेखान् च प्रस्तौति। अस्य काव्यरचनाः सहृदयैः सर्वत्र प्रेम्णा श्रूयन्ते। मारीसशफिले-डेल्फिया-ट्यूरिन्-एडिनबराप्रभृतिषु देशेषु स्वकविताः श्रावयित्वा श्रावयित्वा जनान् मन्त्रमुग्धान् अकरोत्। दूरदर्शनकार्यक्रमेषु आकाशवाणी कार्यक्रमेषु अनेकशः भागं गृहीत्वा स्वकौशलं स्थापितवान्।

देववाणीपरिषद् गतचत्वारिंशद्वर्षेभ्यः सफलतया सक्रिया गतिविधिबहुला सञ्चाल्यते "अर्वाचीनसंस्कृतम्" इति त्रैमासिकसंस्कृतपत्रिका निर्बाधरूपेण गतसप्तत्रिंशद्वर्षेभ्यः सुसम्पाद्य प्रकाश्यते। अनेकेषां नाटकानां काव्यग्रन्थानां च रचना कृता। यद्यपि एते महाविद्यालये राजधान्यां हिन्दीभाषां पाठयितुं नियुक्ताः आसन् तथापि स्वकर्म कुर्वद्भिः संस्कृतस्य महती सेवा विहिता। एते स्वयं तु सक्रियाः तिष्ठन्ति एव अन्यान् अपि सक्रियान् भवितुं प्रेरयन्ति। बहवः युवानः एतैः प्रेरिताः विविधेषु आयोजनेषु अहमहमिकया भागं गृह्णन्ति। अद्य दिल्लीदूरदर्शने आकाशवाण्यां च समाचारप्रवाचकेषु प्रायः एतैः प्रेरिताः सन्ति। एतेषां योग्यतां सम्मानयितुं भारतराष्ट्रपतिना एतेभ्यः सम्मानप्रमाणपत्रं समर्पितम् अपि च भारतसर्वकारेण एतेषाम् अतिविशिष्टं वैदुष्यं लक्ष्यीकृत्य एतेभ्यः 'पद्मश्रीः' सम्मानः उपायनीकृतः।

वयसः पञ्चसप्ततिः वर्षाणि पूरयति संस्कृतभाषायाः उन्नायकोऽयम्। अस्मिन् प्रसङ्गे हीरकजयन्त्युत्सवं मानयद्भिः तत्प्रशंसकैः पद्मश्रीविभूषिताचार्य-रमाकान्तशुक्लहीरकजयन्त्यभिनन्दनग्रन्थः समर्प्यते सादरम्। अस्माभिः सर्वैः मिलित्वा स्वस्ति, स्वस्ति, स्वस्तीति वक्तव्यम्। सौभाग्यवत्याः रमायाः कान्तः पद्मश्रीरमाकान्तशुक्लः जीवेत् शरदः शतं भूयश्च शरदः शतात्।

– आचार्य श्रीधर वासिष्ठः

●

**प्रो. पी.एन.शास्त्री**
कुलपति
**राष्ट्रिय संस्कृत संस्थान**
मानित विश्वविद्यालय
(मानव संसाधन विकास मन्त्रालय, भारत सरकार के अधीन)
**('ए' ग्रेड के साथ राष्ट्रिय मूल्यांकन एवं प्रत्यायन परिषद् द्वारा मान्यता प्राप्त)**

**Prof. P.N. Shastry**
Vice-Chancellor
RASHTRIYA SANSKRIT SANSTHAN
Deemed to be University
(Under MHRD, Govt. Of India)
(Accredited by NAAC with 'A' Grade)

# शुभकामना:

आचार्यश्रीरमाकान्तशुक्लस्य पञ्चसप्ततिवर्षसम्पूर्तौ 'श्रीहीरकप्राभृतम्' इत्याख्यो ग्रन्थः डॉ. शुक्लाय समर्पयिष्यते इति ज्ञात्वा मोमुदीति मे मनः। रविकिरणैरस्पृष्टमपि कविः स्वयं पश्यतीति लोकोक्तिः। वर्तमानकविभास्करः शुक्लः महाकविः जनमनसि राराज्यते। वयसा, वपुषा, ज्ञानेन प्रवृद्धोऽपि कान्तवपुषा, प्रशान्तमनसा प्रौढज्ञानेन चिरन्तनयुवा रमाकान्तः संस्कृतजगति चकास्तितराम्। एवं वृद्धोऽपि युवा, शुक्लोऽप्यशुक्लः, कान्तोऽपि क्रान्तः युगकविः सदा रमते रमाकान्तः। कविनानेन सदा भाति भारतम् विभाति संस्कृतम्। आचार्यशुक्लमहोदयाय 'शतमानं भवति शतायुः पुरुषः' इति कामनया भगवन्तं प्रार्थये।

विजयादशमी
(२२.१०.२०१५)

प.ना. शास्त्री
(परमेश्वरनारायणशास्त्री)
कुलपतिः

●

प्रो. रमेश कुमार पाण्डेय
कुलपति

Prof. Ramesh Kumar Pandey
Vice Chancellor

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
बी-4, कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-110 016

Shri Lal Bahadur Shastri Rashtriya Sanskrit Vidyapeetha
(Deemed University)
B-4, Qutub Institutional Area, New Delhi-110 016

# पद्यरत्नस्तवकम्

अस्ति लोकोत्तमो देशो भारतमिति विश्रुतः।
देहली राजधान्यस्य नगरीनिचयोत्तमा॥
रमाकान्तो रमाकान्तः शुक्लः संस्कृतभास्करः।
उत्तमनगरे तत्र वसति विबुधोत्तमः॥
शास्त्रे वादे कवित्वे च भाषासु प्राकृतादिषु।
छन्दःसु च समीक्षायां सदा विचक्षणोत्तमः॥
भाषां शुक्लां वपुः शुक्लं यशः शुक्लं तथा स्मितम्।
धारयन् राजते शुक्लो रमाकान्तो बुधोत्तमः॥
देववाण्यभिधापूर्वपरिषन्मुख्यतां वहन्।
सुतरां प्रथते यस्य काव्येषु भाति भारतम्॥
संस्कृतवंशसम्भूतोऽर्वाचीनसंस्कृताधिपः।
परोपकारदत्तात्मा संस्कृतज्ञातृवत्सलः॥
कीर्तिस्फूर्तिमतिप्रीतिपुत्रपौत्रधनान्वितः।
शुक्लोऽयं प्रीणयन् जीवेत् सहस्रं शरदां जनान्॥
अभिनन्दनग्रन्थस्य प्रस्तुतिं भवतोऽधुना।
विज्ञाय हृदयेनाहं प्रसीदामीदमर्पयन्॥

(प्रो. रमेशकुमारपाण्डेयः)

**प्रो. देवनारायण झा**
कुलपतिः
कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालय
कामेश्वरनगरम्, दरभंगा (बिहार)
दूरभाष : ०६२७२-२४८९४४
मो. ०८८०९७८७९४६

**Dr. Devnarayan Jha**
VIce-Chancellor
K.S.D. Sanskrit University
Kameshwarnagar, Darbhanga
Tele : 06272-248944
Mob. 08809787946

# सांमनस्यम्

अथेमं वृत्तान्तम् अनुश्रुत्य नितरां मोमुदीति मे मनो यत् सारस्वतसमाराधनसमर्पितजीवनधनानां प्राच्यार्वाच्यविद्याविद्योतितान्तःकरणानां संस्कृतसेवाव्रतानां, संस्कृतभाषाप्रचारसमुद्भवितानेकानुष्ठानतत्पराणां सच्छीलाचारव्रतानां, पद्मश्रीनामसम्मानसम्मानितानां, 'भाति मे भारत' मित्याद्यनेककवितावनितादयितयेव वृत्तानाम् अध्ययनाध्यापन-व्रजसमुपार्जितयशस्कानां, भ्रातृकल्पानां, तत्रभवतां श्रीमतामवद्यविद्या-तमोऽपसारकाणां, प्रो.रमाकान्तशुक्लमहोदयानामनुपमः अभिनन्दनग्रन्थः प्रकाश्यतामेतीति। इमे महानुभावाः मानैकधनाः संस्कृतजगति विश्रुताश्च सन्तीति नैव केवलं भारतीया अपितु पौरस्त्याः पाश्चात्त्या अपि जानन्ति। किं बहुना सुचिरात् संस्कृतमयं जीवनाचारं समर्पणञ्चैतेषां समवलोक्य मे मनो नितरां प्रसीदतीति महते शिवसंकल्पाय कल्पते। एतेषां महानुभावानामभिनन्दनग्रन्थं तदन्तर्गतमनुपमयं जीवनवृत्तं याथातथ्यं, सन्दर्भितानेककोमलकान्तपदावल्यनुस्यूतं, कुसुमोपमं निबन्धनिचयञ्च विलोक्य नूनमेवानन्दातिरेकमनुभविष्यन्ति विद्याव्रतिनो धराधौरेयाः शेमुषीजुषस्तत्रभवन्तो विद्वांस इति मामकीनो दृढो विश्वासः। अन्ते चाहं शिष्योपशिष्यैः सहास्मिन् पुण्ये कर्मणि प्रवृत्तानां तत्रभवतां डॉ. रमाकान्तशुक्लमहाशयानां यशसो दीर्घत्वमायुषो नैरुज्यं, विद्यायाः प्रसरत्वञ्च, कामयमानो वचस उपसंहतिं कामये।

(डॉ.देवनारायणझाः)
कुलपतिः

GRAMS : VIDYAPEETHA

Prof. HAREKRISHNA SATAPATHY
VICE CHANCELLOR

RASHTRIYA SANSKRIT VIDYAPEETHA
(University established under sec. 3 of UGC Act, 1956)
TIRUPATI – 517 064 (A.P.)
(Accredited at A+ Level by NAAC)
Office : Ph. 0877 - 2287680
Fax : 2287838
Residence : Ph. : 2287826
Fax : 2286349
E-mail : hks_vc@yahoo.co.in

"Centre of Excellence in the Subject of Traditional Sastras"

# शुभकामना

पद्मश्रीविभूषिताचार्यश्रीरमाकान्तशुक्लमहोदयाः न केवलं भारते अपि तु भारताद्बहिरपि रसराजसहृदयशेखरकविताकामिनीकान्तरूपेण विदुषां समवाये परिचिताः। बहूनां काव्यानां रचयितारः, बहूनामनुष्ठानानां निर्मातारः, निखिलेऽपि विश्वे संस्कृतभाषायाः प्रचारप्रसारकर्तारः, समस्तमानसिकाध्यात्मिकसम्पदामनन्यदातारः तथा स्वकवितापाठमाध्यमेन कर्मक्लान्त-रसपिपासूनां समस्तदुःखापहर्तारः एते संस्कृत-वाङ्मये विश्वविश्रुताः। पद्मश्रीराष्ट्रपतिसम्मान-संस्कृताकादमीपुरस्कारप्रभृतिनैकबहुमान-विभूषिताः आचार्यरमाकान्तशुक्लमहोदयाः सर्वेषां विदुषामन्तःकरणे चिरं विराजमानाः भूयो भूयः सुरभारतीचरणपङ्कजसंसेवनार्थं प्रचोदयन्ति अनुक्षणमिति कथनं निष्प्रयोजनम्।

आनन्दस्य विषयः यत् तस्य सम्पूर्णसार्थकजीवनस्य हीरकजयन्ती-महोत्सवमुपलक्ष्य 'श्रीहीरकप्राभृतम्' इति अभिनन्दनग्रन्थः प्रकाश्यते। सप्तसिन्धु-सम्मिश्रितसमुद्रस्पृशः ग्रन्थोऽयं सप्तविभागविभूषितः नितरां विद्या-बुद्धि-विवेक-विचार-व्यवहार-वैभवदिशा सागरोपमानां श्रीरमाकान्तशुक्लमहोदयानां बहुविधप्रतिभा-तरङ्गसङ्गसुन्दरः भविष्यति। सन्दर्भेऽस्मिन् महासागरोपमस्य ग्रन्थस्यास्य प्रकाशनस्य सफलतां कामयमानः, रसराजसागरोपमाचार्यरमाकान्तशुक्लमहोदयानां शताब्दीपूर्त्ति-ग्रन्थप्रकाशनमाध्यमेन समग्रविद्वत्समाजः तेषां कृते अभिनन्दनानि पुनः पुनः विनिवेदयतु इति भगवतः श्रीवेङ्कटेश्वरस्य परमपावनचरणपङ्कजयोः सम्प्रार्थ्य हीरकजयन्तीमुपलक्ष्य कविवराणां सकलमङ्गलं कामये-

> **रमाकान्तः कान्तः सकलविदुषामन्तरतमः**
> **समन्तात्कान्तत्वं वहति कवितानन्तहृदये।**
> **स एवान्तःसारः सकलरससञ्चारनिपुणः**
> **गिरामन्त्योदात्तः भुवि विजयतां 'भारतसुतः'॥**

हरेकृष्ण शतपथी -

हरेकृष्ण शतपथी
कुलपतिः

**Shree Somnath Sanskrit University**
(Estd. by Government of Gujrat)
Rajendra Bhuvan road, VERAVAL-362266
District : Gir Somnath, Gujrat, INDIA
Phone : 02876-244531, Fax : 02876-244417

**Prof. Ark Nath Chaudhary**
Vice- Chancellor

# अभिनन्दनम्

संस्कृतवाङ्मयसेवासमाकुलानां विद्वद्धौरेयात्मजानां काव्यामृतरचनया समग्रेऽपि देशे लब्धयशसां विप्रकुलालङ्कारभूतानां राष्ट्रपतिसम्मानसम्मानितानां पद्मश्रीसमलङ्कृतानां संस्कृतपत्रकारितामार्गमवलम्ब्य संस्कृतप्रचाराय नूतनपथप्रदर्शकानां मान्यमान्यानां श्रीमतां रमाकान्तशुक्लवर्याणां हीरक-जयन्तीमुपलक्ष्य तदीयैः शुभचिन्तकैः हीरकजयन्तीशुभाभिनन्दनग्रन्थः 'श्रीहीरकप्राभृतम्' प्रकाश्यं नीयमान इति विदित्वा नितरां मोमुदीति चेतः।

आदरणीयानां श्रीशुक्लमहोदयानां सान्निध्यं नैकशः मया समधिगतम्। काव्यामृतञ्चापि तैः पायितं भृशं, छात्राश्चापि आप्लाविता निरन्तरं मदीया अति अधुनाऽपि संस्मारं संस्मारं आनन्दप्रकर्षमनुभवामि। शुभेऽस्मिन्नवसरे मदीया प्रणतिः समर्प्यते, शतायुष्यं च तेषां काम्यतेऽनेनार्कनाथेन।

**संस्कृतस्य प्रचाराय योऽहर्निशं समुद्यतः।**
**भारतीया च संस्कृतिः धार्यते येन जीवने॥**
**शतं जीव्याद् रमाकान्तः शुक्लोपाह्वो महाकविः।**
**तनोति यस्य कीर्तिं हि भारते भाति भारतम्॥**

**भवदीयः**

**( प्रो. अर्कनाथचौधरी )**
**कुलपतिः**

●

प्रो० महावीर अग्रवाल
डी.लिट्, संस्कृत
कुलपति

उत्तराखण्ड संस्कृत विश्वविद्यालय
बी०एच०ई०एल० मोड़, हरिद्वार-दिल्ली राष्ट्रीय राजमार्ग,
पो०ओ० बहादराबाद, हरिद्वार 249 402
फोन: का०: 01334-250896, 8449088884
फोन आ०: 01334-228544
ई-मेल: mahavir_gkv@yahoo.co.in
वेबसाईट: www.usvv.org

# हार्दिकमभिनन्दनम्

संस्कृतकाव्यपञ्चाननः अर्वाचीनकाले संस्कृतसाहित्यध्वजोत्तोलकः, विविधानां रसभावभरितानां दिव्यभावोद्बोधकानां काव्यानां प्रणेता, सर्वेषां संस्कृतानुरागिणां वन्दनीयः डॉ. रमाकान्तशुक्लः कविवरेण्यः पञ्चसप्तति-संवत्सराणि सानन्दं सोत्साहं सफलीकरोतीति श्रावं-श्रावं वयमतितरां मोदामहे।

गुणिगणगणनीयानां विविधविद्याविभूषितानां मान्यानां डॉ. शुक्ल-महाभागानाम् अमृतमहोत्सवे देशस्य संस्कृतपरिवारः शारदातनयानाम् अभिनन्दने ग्रन्थं प्रकाशयतीति ज्ञात्वा सर्वे संस्कृतसेविनः मोदन्तेतमाम्।

प्रातःस्मरणीयानां सततं ब्रह्मानन्दे निमग्नानाम् अन्वर्थनाम्नां श्रीमताम् आचार्यब्रह्मानन्दशुक्लमहोदयानां कुले जनिं लब्ध्वा मान्यैः वदान्यैः डॉ. रमाकान्तशुक्लमहाभागैः सततं सेविता दैवी वाक्।

हर्षप्रदेऽस्मिन् हीरकजयन्तीसमयेऽहमपि हृदयेन, मनसा, वाचा आचार्यप्रवराणां हार्दिकं स्वागतमभिनन्दनं व्याहरामि।

करुणासागरः परमेश्वरः राष्ट्रपतिपुरस्कारेण, पद्मश्रीसम्मानेन च अभिनन्दितेभ्यः डॉ. रमाकान्तशुक्लमहोदयेभ्यः दीर्घम् आयुः, स्वास्थ्यं, सौभाग्यं, चन्द्रोज्ज्वलां कीर्तिं च वितरतु इत्येतदेव मुहुर्मुहुः प्रार्थयामहे।

२२.११.२०१५

प्रो. महावीर अग्रवालः
कुलपतिः
उत्तराखण्डसंस्कृतविश्वविद्यालयः, हरिद्वारम्।

# साँची बौद्ध - भारतीय ज्ञान अध्ययन विश्वविद्यालय

प्रो. (डॉ.) शशिप्रभा कुमार
कुलपति

क्रमांक ..............................

दिनांक ..............................

## शुभाशंसा

दिनांक : 3/11/2015

परम आदरणीय डॉ. रमाकान्त शुक्ल जी के सम्मान में 'श्रीहीरकप्राभृतम्' नामक अभिनन्दन-ग्रन्थ का आयोजन किया जा रहा है, यह अत्यन्त प्रसन्नता का विषय है। मैं एतद्द्वारा उनकी दीर्घायु, शुभ स्वास्थ एवं सक्रिय सारस्वत जीवन की कामना करती हूँ। डॉ. रमाकान्त शुक्ल जी अप्रतिम व्यक्तित्व के स्वामी हैं। कवि, लेखक, अध्यापक, पत्रकार, प्रकाशक एवं समीक्षक इन विविध रूपों में आप संस्कृत-साहित्य की श्रीवृद्धि करते रहे हैं। 'भाति मे भारतम्' जैसी अनेक लोकप्रिय संस्कृत रचनाओं के यशस्वी कृतिकार डॉ. शुक्ल की ख्याति समग्र भारत में सुविदित है। भारत के महामहिम राष्ट्रपति द्वारा अपनी संस्कृत सेवाओं के लिए प्रशस्ति-पत्र से सम्मानित डॉ. शुक्ल भारत सर्वकार द्वारा 'पद्मश्री' उपाधि से भी विभूषित किये जा चुके हैं। देववाणी-परिषद् की स्थापना करके आपने एक महनीय संकल्प को पूर्ण किया तो 'अर्वाचीन संस्कृतम्' के सम्पादक के रूप में अनवरत आधुनिक संस्कृत साहित्य के प्रकाशन में संलग्न है।

मेरा सौभाग्य रहा कि मैं अपने दिवगंत चाचाजी(डॉ. गौतम सचदेव) के माध्यम से अपने विद्यार्थी जीवन में ही डॉ. रमाकान्त शुक्ल के सम्पर्क में आई तथा उनकी विलक्षण प्रतिभा से न केवल प्रभावित हुई अपितु उनसे यथासम्भव प्रेरणा एवं मार्गदर्शन भी प्राप्त करती रही। अतः आज उनकी हीरक जयन्ती के अवसर पर सादर शुभकामनाएँ प्रेषित करते हुए मुझे अपार हर्ष है। वेदवाणी के माध्यम से यही प्रार्थना करती हूँ कि आप शतायु हों तथा यावज्जीवन 'अदीन' होकर रहें- **अदीनाः स्याम शरदः शतम्।**

( कुलपति )

**KUMAR BHASKAR VARMA SANSKRIT AND ANCIENT STUDIES UNIVERSITY**
NALBARI- 781335, ASSAM
Website- www.kbvsasu.in Email Id- kbvsasun@rediffmail.com
Phone – 03624-220142 Fax- 03624-222418

***Prof. Dipak Kumar Sharma***
*Vice Chancellor.*

Phone No-03624-220153
E-mail:dipaksharma2@rediffmail.com

# शुभाशंसनम्

भारतसर्वकारेण 'पद्मश्री' सम्मानेन सभाजिताः, राष्ट्रपतिमहोदयेन प्रमाणपत्रेण सुस्वीकृताः आचार्याः डॉ. रमाकान्तशुक्लमहोदयाः साम्प्रतिकसमये न केवलं भारतवर्षे, बहिश्चापि संस्कृतविदुषां मूर्धन्यभूताः वर्तन्ते। संस्कृतवाङ्मयस्य बहुशाखासु प्रो. शुक्लमहोदयानां महत्संकलनं विद्यते इति सर्वेषां सुविदितमस्ति। तेषां कृतयः न हि शोधकर्मसु सीमिताः वर्तन्ते, परन्तु भावयितृकारयितृप्रतिभाधराः आचार्यवर्याः सर्जनात्मिकानां रचनानां कृते सर्वैः वन्दिताः सन्ति। कविताकथाखण्डकाव्यमहाकाव्यदृश्यकाव्यगीतप्रभृतीनां विरचनेन, वार्तापत्रस्य शोधग्रन्थानां प्रकाशनेन, अनारतं दूरदर्शनमाध्यमेन संस्कृतस्य प्रचारप्रसारार्थं कृतसंकल्पैरेतैः महाभागैः संस्कृतसेविनां कृते महदुपकारः सुसाधितः।

एतेषां ज्ञानवृद्धानाम् अभिनन्दनार्थं तदीयगुणग्राहिणः अभिनन्दनग्रन्थ-प्रकाशने तत्पराः सन्ति इति महतः हर्षस्य सन्तुष्टेः चावसरः वर्तते। अस्य प्रयासस्य साफल्यं सर्वथा कामये। प्रो. शुक्लमहोदयस्य लेखनी चिरं निरलसा निरर्गला च तिष्ठतु इत्यपि कामये।

(दीपककुमारशर्मा )
कुलपतिः

SHRI JAGANNATH SANSKRIT VISHVAVIDYALAYA
SHRI VIHAR, PURI - 752003, ODISHA

Prof.Gangadhar Panda
VICE - CHANCELLOR

Ph. (06752) 251663(Off.)
251640(Res.)
250484(Fax.)
visit : www.sjsv.nic.in
Email:sanskrit.university@yahoo.com

दिनांक- २७.११.२०१५

# शिवसङ्कल्प

उत्कल विश्वविद्यालय, भुवनेश्वर से सम्बद्ध सामन्त चन्द्रशेखर महाविद्यालय, पुरी से बी.ए. (ऑनर्स) करने के पश्चात् न जाने मेरा कौन सा अपूर्व मुझे महाकाल की नगरी उज्जैन की ओर आकर्षित कर ले गया, मैं इसे आश्चर्य समझता हूँ। चुम्बक जैसे लोहे को अपनी और खींचता है, मैंने उसी तरह विशाल विशाला में पैर रख कर मेघदूत की उस पंक्ति को मन ही मन गुनगुनाया। क्योंकि इससे पूर्व मेघदूत छोड़कर कालिदास की अन्य कृतियाँ हमारे पाठ्यक्रम में नहीं थीं।

**प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान् ,**
**पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम्।**
**स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां**
**शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम्।।**

तत्पश्चात् पूज्य गुरुदेव प्रो. वि. वेंकटाचलम् एवं प्रो. श्रीनिवास रथ जी से मिल कर मैं उन उन स्थानों को कौतूहल वश देखने गया था, जिसे कालिदासने अपनी रचनाओं में रेखाङ्कित किया था। भूतभावन महाकाल, शिप्रा, उज्जैन की विपणियाँ एवं सौध आदि मेरे मन को मोहित करने लगे। जीवन में प्रथम बार घर छोड़कर प्रदेश के बाहर आया था, परन्तु आहिस्ता आहिस्ता उज्जैन एवं उज्जैन के लोगों ने मुझे इतना प्यार दिया कि मैं घर की दूरी को भूलने लगा।

देखते देखते देवप्रबोधिनी एकादशी आ पहुँची। मुझे मालूम नहीं था कि उस दिन उज्जैन में भारत के कालिदास प्रेमी विद्वद्गण पण्डित सूर्यनारायण व्यास जी के द्वारा आरम्भ किये गये कालिदास समारोह में भाग

लेने हेतु इकट्ठा होते हैं। कालिदास के यक्ष का उसी दिन ही शापोद्धार हुआ था। वह इस दिन भूलोक को छोड़कर अपनी प्रियतमा के पास अलकापुरी में वापस चला गया था–

**शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ।**
**शेषान् मासान् गमय चतुरो लोचने मीलयित्वा॥**

इस कालिदास समारोह में एक दिव्य विभूति, अनेक प्रकारके गुणों के धनी, सज्जन एवं सहृदय व्यक्ति से मुलाकात हुई थी, वे थे कविवर डॉ. रमाकान्त शुक्ल जी। विद्वत्ता के साथ साथ उनके सहजपन एवं अपार आकर्षण की शक्ति ने मुझे उनका अन्तरङ्ग बना दिया। वे एक सहज कवि होने के कारण मुझसे पूछ बैठे कि पण्डा जी, ओडिआ भाषा में एक भजन सुनवाईये जो संस्कृत के नजदीक हो। स्वतः मेरे मन से श्रीजगन्नाथ का एक भजन, जिसे एक मुसलमान कवि सालवेग ने लिखा था, वह निकल आया–

**आहे नील शइल, प्रबलमत्तवारण।**
**मो आरत नलिनीवनकु कर दलन।**

संस्कृत अनुवाद–

**आहे नीलशैलस्य प्रबलमत्तवारण।**
**मदीयार्त्तिनलिनीदलस्य कुरु दलनम्॥**

इस प्रकार कालिदास समारोह में प्रतिवर्ष प्रायः उनका सान्निध्य प्राप्त होता रहा। विद्यार्थी जीवन से ही मैं उज्जैन में पधारे समस्त मेहमानों की भगवान् की दृष्टि से सेवा करता रहा। डॉ. शुक्ल यदि किन्हीं कारणवश उज्जैन में नहीं आ पाते थे तो मेरा मन उनको ढूँढता रहता था। कुछ वर्षों के बाद भाग्यवश मैं भारत शासन के मानव संसाधन विकास मन्त्रालय में उपशिक्षा सलाहकार पद पर नियुक्त हुआ और डॉ. शुक्लजी के साथ दिल्ली संस्कृत अकादमी, राष्ट्रीय संस्कृत संस्थान एवं श्रीलालबहादुर शास्त्री राष्ट्रीय संस्कृत विद्यापीठ की अनेक संगोष्ठियों एवं कविगोष्ठियों में मिलने का अवसर मिला और मैं उनके नभश्चुम्बि व्यक्तित्व का लाभ प्राप्त करता रहा। धीरे धीरे उनका स्वरचित 'भाति मे भारतम्' काव्य न केवल काव्य जगत् में अपि तु समग्र भारत में ख्यात होकर सभी के कण्ठ में निवास

करने लगा। उनका यशः दिगन्त विस्तारी होने लगा और उन्होंने समूचे देश में महाकवि की दर्जा प्राप्त किया।

भर्तृहरि ने लिखा है-

**परिवर्त्तिनि संसारे मृतः को वा न जायते।**
**स जातो येन जातेन याति वंशः समुन्नतिम्।।**

संस्कृत के प्रति उनके अवदान को देख कर भारत शासन की ओर से राष्ट्रपति-सम्मान एवं **पद्मश्री** जैसे नागरिक सम्मान उन्हें प्राप्त हुए। आज उन जैसे महान् व्यक्ति के उद्देश्य से एक अभिनन्दन ग्रन्थ प्रकाशित हो रहा है, यह अत्यन्त हर्ष का विषय है। मैं परम कारुणिक श्री जगन्नाथ जी के चरणों में नतकन्धर होकर डॉ. रमाकान्त शुक्लजी के दीर्घायु, यश एवं अभ्युदय की प्रार्थना करता हूँ।

**जगन्नाथस्वामी नयनपथगामी भवतु मे।**

27/11/15

**गङ्गाधर पण्डा**
**(कुलपति)**

●

कुलपति
सम्पूर्णानन्द संस्कृत विश्वविद्यालय
वाराणसी-221002

Vice Chancellor
Sampurnand Sanskrit University
Varanasi-221002

नैक द्वारा 'ए' ग्रेड प्राप्त

दूरलेख (Telegram) : 'श्रुतम्'
दूरभाष (Phone) : कार्यालय(Off.) 0542-2204089
निवास (Resi) 0542-2204213
0542-2206617
फैक्स (Fax) : 0542-2204089
ई-मेल (E-mail) : vc.ssvv@gmail.com

पत्रांक /Ref. VC 4701/128/2015

दिनांक /Date 8.12.15

## शुभाशंसा-

यह जानकर अत्यन्त प्रसन्नता हुई कि आचार्य शुक्ल जी के जन्म के 75वें वर्ष की सम्पूर्ति के उपलक्ष्य में पद्मश्रीविभूषिताचार्यश्री रमाकान्तशुक्लहीरकजयन्तीशुभाभिनन्दनग्रन्थसमिति द्वारा **हीरकप्राभृतम्** ग्रंथ का दिनांक 24.12.2015 को दिल्ली संस्कृत अकादमी के सभागार में आचार्य शुक्ल जी को समर्पित किया जायेगा। एतदर्थ उक्त ग्रंथ से जुड़े सभी विपश्चिद्रत्नों को बधाई देता हूँ।

मुझे आशा ही नहीं पूर्ण विश्वास है कि उक्त सप्तविभागसंवलित अभिनन्दन ग्रंथ प्रकाशन अतीव महदुपयोगी सिद्ध होगा।

अभिनन्दन ग्रंथ की सफलता हेतु मेरी कोटि-कोटि शुभकामनायें प्रेषित है।

(प्रो० यदुनाथ प्रसाद दुबे)
कुलपति

श्रीमदुभयवे.विल्लूर्नडादूश्रीभाष्यसिंहासनं
शास्त्रसाहितीवल्लभ.करुणाकराचार्यः
B.A. (Mech) M.A.(Sanskrit ) आस्थानविद्वान्,
श्रीरङ्गं-श्रीमदाण्डवनाश्रमः

# श्रीरमाकान्तशसशुभनुतिः

(Note- The title means Work composed as respectful "pranamas" to Padmashri Dr.Ramakantasukla on the eve of the celebrations of his seventy fifth birth day. The word शस (sasa) has been coined to denote 75 as per the "ktapaya (कटपय)" code).

रमाकान्तशुक्लाभिधानस्समिन्धे रुमाकान्ततातस्य तेजो दधन्मे।
उमाकान्तमूर्ध्निस्थितायाः प्रवाहं ह्युमा कान्तमानीय बुद्ध्या गिरा च॥१॥

The great soul called Dr. ramakantasukla, bearing the lustre of Sun who is the father of the Rumakanta, i.a. Sugreeva is shining by bringing the attractive Ganges who stays in the head of Umakanta, Lord Mahadeva near to all of in the form his thinking and literary works.

हीरकमहमहितोऽयं हीरकसदृशे शरीर इन्धां स्वे।
पारधरा भूतो यस्सारजुषां वाग्विहारसङ्घानाम्॥२॥

Dr. Ramakantasukla has been respected as the one at the upper end of a cluster of literatures with flow of highly powerful words. He is now adored by the celebrations of his Diamond jubilee. Let him shine in his body glowing like a Diamond.

मासेति वर्ण्ये महिते महेऽयं तद्वार्धकस्तोत्रकरो विभातु।
सयौवनं भाति यदीयवाचि समाभिनन्द्यं किल भारतं मे॥३॥

The Dimond Jubilee celebrations can be termed as "**Masa**" also in "ktapaya (कटपय)" code. Dr. Ramakantasukla has written a beautiful work on old age. And also on youths. My Bharatham shines (भाति मे भारत्)in his literary work respected by all. Reference here is made to Dr. Ramakantasukla's master piece "भाति मे भारतम्"

वसुमतीशतकस्तुतिटीकया वसुमतीसहजेषु मुदं ददत्।
अपि च कुञ्जर इत्युपधां भजन् कविषु भाति सशासमहः कृती॥४॥

"Vasumathi satakm" is a hymn of 100 slokas composed by the late Asukavi sarvabhouma srinidhi Swamy our father. He wrote this Work on Vasumathi Goddesses in the temple of Lord Oppilliappan near Kumabakonam in Thanjavoor District of Tamil Nadu seeking a girl child. Goddesses Vasumathi responded to his praters by blessing him with a girl child. We the brothers of Vasumathi requested Dr. ramakantasukla to write a commentary for this work in Sankrit. Dr- Ramaksntasukla obliged in no time. We presented to him the title **Kavikunjara** through Villur Asukavi Family Trust (VaFT) during the centenary celebrations of our father organized in unison with Rashtrya Samskrita Vidyapeeth in Tirupati. He is the foremost of contemporary Poets in sanskrit; an achiever. He is appropriately shining with Diamond jubilee.

आशाद्विशती भणिता याऽसौ प्रेक्षायुग्जननन्दथुदात्री।
सम्प्रति साशामह एष स्यात् शतमानमितं स्वायुः प्राप्य॥५॥

His work Aasa Dwisatee gives immenso pleasure to Scholars. Le has his "**Sasa**" i.e. Diamond Jubilee now. We wish he lives full life of hudred yeard and celebrates with us here.

बाल्यं यत्कविताऽथ वार्धकमपि प्रत्यक्षचित्रस्थितं
कृत्वा मानस एव भाति नितरां साहित्यसारस्पृशाम्।
श्रीमानेष रमाख्यया मम पितुस्सूक्तेस्सुटीकां ददत्
शुक्लश्श्रीरमणो विभाति तु परं कृष्णं हसन् सृष्टिषु॥६॥

His work on old age and his work on childhood are pictures painted in word and have found a place in the hearts of lovers of literature. His commentary on the work by my father is another excellent creation. Thus Dr. Ramakamtsukla (meaning consort of Lakshmee and Sukla (white)) beats Lord Ramakanta Krisna (meaning consort of Lakshmee and krishn a black) creator of the Universe with many creations not in order!.

यो राष्ट्रपत्युत्तममाननेन संमानितः पद्मरमेति कीर्त्या।
निर्वैरचित्तोऽद्य परं सवैरमहो रमाकान्त इहापि कृत्यैः॥७॥

Dr. Ramakantasukla is Padmashri awardee and recipient of certificate of honour from the President of India. He is by natuere one without (वैरम्) malice to anyone as can be seen by his actions. But is now with the clebrations of वैर Diamond Jubilee. Vaira is the Tamil for Diamond!

मथोत्सवोऽयं मथ एव भूयादर्शोनयात्तं च मदीयबुद्ध्या।
बुधाः परं मन्मथ इत्युशन्ति वृद्धो विचित्रः किल मन्मथोऽयम्॥८॥

The term **matha** in Sanskrit will mean 75. Those with **matha** can be also be called **Matha** as per the rule अर्श आदिभ्योऽच् (5-2-127). Thus Dr. Ramakantasukla becomes **Matha.** All scholars feel he is theirs. so all of them call him **"Man-matha."** Thus we now have a 75 year old cupid. Can there be anything more wonderful than this?

साध्यं यस्य सदा विभाति हृदये तुङ्गं च शब्दास्तथा
शुद्धा यस्य गिरीह यस्तु नितरां मीमांसते सद्गिरि।
डाक्टर् सन् कविरेष भाति विविधैश्शास्त्रैर्वृतस्सम्प्रति
कृष्णोच्छिष्टमिति स्मृतिं गिरमसौ शुक्लः कथं नो नयन्?॥९॥

Dr.Ramakantasukla thinks of high Targers (Saadhyam) always. Those well versed in logic always think of the technical term Saadhyam in their field. He uses correct and appropriate words. Grammarians always practice this. He has doctorate and does research in the literature respected. This is what Meemaskas do. He is a poet. Thus He is in good association all the fields like Logic Grammar Meemamsa Literature ets.. He brings to our mind the adage that there is no field left untouched by Vyasa, who is also known sa Krishna- black in hue.The only differnt aspect is he is Sukla- (This means white in hue)

श्रीयाज्ञवल्क्यो मम भाति विद्वान् शुक्लं यजुर्यो महितं दधाति।
आधत्त सोऽर्थान् जनकादयं मे ह्यर्थांस्तु वाचां जनकस्य दत्ते॥१०॥

Dr. Ramakantasukla the great scholar associated with Sukla Yajur Veda appears to me as an embodiment of Sage Yagnavalkys. He was Famous for taking Arths (wealth) as Dakshina from King Janaka.But Dr. Ramakantasukla by writing a commentary on my father's) (janaki's work gave Arthas (meanings) to us.

भ्रातुर्बालकवेर्ममैष विबुधस्निग्धस्सुहृत् तत्कृतीः
श्रीमद्वायुसुताङ्घ्रिसत्स्तुतिमुखास्सम्यक्प्रकाशं नयन्।
आवुत्तस्य रमास्तुतिं कृतिमपि श्रीतातपादोदिता
व्याख्यायास्ति मदीयभव्यसुमतिर्विद्वत्कुटुम्बप्रियः॥११॥

Dr. Ramakantasukla is a close friend of my elder Brother Calakavi Sri. S.Sundararajan IAS . His works like Hanumatpanchasat were published by him without any error. He pub-

lished **Lakshmeesatam** a work of my Sister,s husband Dr.V.Kannan. He has written commentary on one of my father,s works and translated one in Hindi. He is interested in my future. what does this indicate? Dr. ramakantasukla is a close friend of all families of scholars:

लक्ष्मीकान्तश्शुक्लः कृष्णः स्यातां प्रसन्नचित्तौ तौ।
इति कविकुञ्जरशसमहमुदितश्श्लोकान् दयाकरोऽतानीत्॥१२॥

Karunakaran, elated on the occasion of the celebrations of the Dimond Jubilee of Kavikunjara (Dr. Ramakantasukla). wrote these slokas with the intention that both the Lakshmikantas- Ramakantas- Krishna (Lord Vishnu) and Sukla (Dr. Ramakantasukla) may be pleased to bless him!

●

# तावत् कीर्तिर्ध्रुवं ध्रुवा

आचार्यरामकरणशर्माध्यक्षे सुरक्षितम्।
संरक्षकं मण्डलं तत् शुक्लहीरकप्राभृतम्॥१॥

वासिष्ठश्रीधराध्यक्ष्ये परामर्शकमण्डलम्।
हीरकं जीवने श्रेष्ठं श्रीरमाकान्तभूषणम्॥२॥

'पद्मश्री'श्रीरमाकान्तशुक्लहीरकमहोत्सवे ।
शुभाभिनन्दनग्रन्थ-प्रकाशस्तु सुनिश्चितः॥३॥

वार्तामिमां शुभां श्रुत्वा मुदितं संस्कृतं जगत्।
तत्राहमहमिका जाता तदीयस्तवने मुदा॥४॥

अयं मन्दमतिस्तत्र किं कुर्यात् स्तवमङ्गले।
शारदामात्रनिष्ठा मे सदा संस्कृतचिन्तने॥५॥

नैवास्ति मे यद्यपि पूर्ववासना गुणैः सुबद्धं प्रतिभानमक्षरम्।
तथापि यद्यत्र स्फुटीकृतं मे स्वीकार्यमस्तु सुहार्दमानसम्॥६॥

पवित्रवंशः शुक्लानां येन नीतोऽस्ति धन्यताम्।
स्वजन्मना नमस्तस्मै रमाकान्ताय धन्विने॥७॥

यस्य हस्ते ध्रुवं सिद्धम् 'अर्वाचीनं' धनुः सदा।
'संस्कृत'ममृतं यत्तु शत्रूणां ध्वसकं ध्रुवम्॥८॥

संस्कृते पत्रकाराणां महासंघोऽस्ति विश्रुतः।
तदाध्यक्ष्यं ध्रुवं यस्य तस्य कीर्तिर्ध्रुवं ध्रुवा॥९॥

चिरं जीयात् शतं जीयात् रमाकान्तः सहोदरः।
यावत् संस्कृतमगनः स्यात् कीर्तिस्तावद् ध्रुवं ध्रुवा॥१०॥

●

फोनः (0141)2376008, सी-8, पृथ्वीराज रोड, जयपुर-302001

राष्ट्रपति-सम्मानित
देवर्षि कलानाथ शास्त्री
(भूतपूर्व अध्यक्ष, राजस्थान संस्कृत अकादमी
एवं निदेशक, संस्कृत शिक्षा एवं भाषा विभाग, राजस्थान सरकार)
अध्यक्ष, आधुनिक संस्कृत पीठ, ज.रा. राजस्थान, संस्कृत विश्वविद्यालय
प्रधान सम्पादक "भारती" संस्कृत मासिक
सदस्य, संस्कृत आयोग, भारत सरकार

मो: +91-8764044066
फोनः (0141)2376008
अध्यक्ष, मंजुनाथ स्मृति संस्थान
सी-8, पृथ्वीराज रोड
जयपुर-302001

# शुभाभिनन्दनवाचः

मैं विगत अर्धशताब्दी से आधुनिक संस्कृत पत्रकारिता, नव गीत लेखन और नवग्रन्थ सम्पादन आदि अनेक सारस्वत यज्ञधाराओं के पुरोधा, 'अभिनवराष्ट्रकवि', 'अर्वाचीनसंस्कृतम्' के यशस्वी संस्थापक-सम्पादक राष्ट्रपतिसम्मानित, पद्मश्री अलङ्करण से सभाजित डॉ. रमाकान्त शुक्ल की सुदीर्घ साहित्य साधना का साक्षी रहा हूँ। स्वयं संस्कृत विद्वत्परिवार के वंशधर डॉ. शुक्ल मेरे पिता, आधुनिक संस्कृत के युगपुरुष भट्ट श्री मथुरानाथ शास्त्री 'मञ्जुनाथ' के समूचे साहित्य के अध्येता रहे हैं और संस्कृत काव्यप्रणयन तथा संस्कृतपत्रकारिता में नवाचारों के पक्षधर रहे हैं। अतः आकाशवाणी, दूरदर्शन आदि में भी संस्कृत कार्यक्रमों के प्रसारण में इनकी अग्रणी भूमिका गत पाँच दशकों में उल्लेखनीय रही है।

'भाति मे भारतम्' की प्राञ्जल प्रस्तुति ने जिस प्रकार इनकी वाणी को लोकप्रिय बनाया है उसी प्रकार अर्वाचीनसंस्कृतम् के नैरन्तर्य और अनेक ग्रन्थों के प्रकाशन ने इनकी लेखनी का वर्चस्व स्थापित कर दिया है। ऐसे सरस्वती पुत्रों के सम्मान में, जिनकी साधना से संस्कृत जगत् प्रभूत गौरव का अनुभव करता है, विविध आयोजन और प्रकाशन हों यह हम सबकी कामना रही है। इसी क्रम में मुझे यह जानकर अत्यन्त हर्ष हुआ कि अपने यशस्वी जीवन के ७५ वर्ष पूरे कर रहे डॉ. रमाकान्त शुक्ल के अभिनन्दन हेतु विशाल ग्रन्थ 'श्रीहीरकप्राभृतम्' प्रकाशित किया जा रहा है। इस शुभावसर पर बन्धुवर डॉ. शुक्ल को शतशः बधाइयाँ तथा आयोजकों को साधुवाद समर्पित करते हुए मैं परमपिता से प्रार्थना करता हूँ कि वे डॉ. शुक्ल को शतायु करें और निरन्तर स्वस्थ एवं सक्रिय रखें जिससे हम सब इसी प्रकार गौरवान्वित होते रहें।

देवर्षि कलानाथ शास्त्री

-देवर्षि कलानाथ शास्त्री

●

E-mail : vvrinstitute@gmail.com
vvr_institute@yahoo.co.in

☎ 01882 - 223606
223581,223582

**विश्वेश्वरानन्द वैदिक शोध संस्थान**

डाकघर : साधुआश्रम, होश्यारपुर - 146 021 (पंजाब, भारत)

## पद्मश्री ( डॉ. ) रमाकान्त शुक्ल हीरक जयन्ती

दिनांक ११.१२.२०१५

डॉ. रमाकान्त शुक्ल के ७५ वें जन्मदिन के उपलक्ष्य में मनाई जा रही हीरक जयन्ती के शुभावसर पर हार्दिक बधाई देते हुए मुझे परमप्रसन्नता हो रही है। डॉ. शुक्ल वर्तमान में संस्कृत जगत् के देदीप्यमान भास्कर के समान हैं, जो अपनी आभा से स्वतः भासित होते हुए आगामी पीढ़ी के लिए भी मार्ग दिखाते हुए संस्कृत जगत् का महान् उपकार कर रहे हैं। ऐसे शुभावसर पर भवानीपति शंकर से प्रार्थना है कि वह अपने नाम को चरितार्थ करते हुए संस्कृत जगत् के कल्याण के लिए इनको शतायु से भी अधिक आयु प्रदान करें, जिससे ये संस्कृत की अधिक से अधिक सेवा कर सकें। मुझे आशा ही नहीं पूर्ण विश्वास है कि डॉ. शुक्ल आगामी समय में संस्कृत की अधिकाधिक सेवा करते हुए अग्रिम शतायु जयन्ती को भी अपने परिवार के साथ प्रसन्नतापूर्वक मनायेंगे।

डॉ. शुक्ल एक महान् शिक्षक हैं। ऐसे शिक्षकों के प्रति ही वैदिक ऋषि संकेत करता हुआ कहता है–

**तरणिरित् सिषासति वाजं पुरन्ध्या युजा।**
**आ व इन्द्र पुरुहूतं न मे गिरा तष्ठेव सुद्रवम्॥ ऋ. ७.३०,२**

**आपकी दीर्घायु की कामना करता हुआ**

**इन्द्रदत्त उनियाल**
**संचालक**

# शुभाशिषः

महानयं प्रहर्षप्रसङ्गो यद् भवन्तो विद्वद्वरेण्याः सम्भूय विविधविषयविचक्षणानां शास्त्रकृतभूरिपरिश्रमाणां विविधविषय-विलेखनप्रबोधितमानवमूल्यानां श्रीमतां रमाकान्तशुक्लमहोदयानां हीरकजन्मपर्वणि तत्सम्मानमनुष्ठातुं ग्रन्थमेकमभिनन्दनात्मकं प्रकाशयन्तीति। नूनं संस्कृतसंस्कृतिरक्षणैकव्रतैः श्रीरमाकान्तमहोदयैः महती वाङ्मयी सेवा विहिता। तेषां समभिनन्दनेन भूरि प्रमोदितं मे चेतः।

परब्रह्मस्वामिनारायणः निरामयस्वास्थ्यादिप्रदानैः सुयशोवर्धनादिभिः सर्वविधसुखशान्तिभिश्चाऽनुगृह्णात्वेतान् पण्डितवर्यान् इति गुरुहरीणां श्रीप्रमुखस्वामिमहाराजानां चरणयोः संप्रार्थये। अस्तु।

**महामहोपाध्यायः साधुभद्रेशदासः**
(अध्यक्षः, बी. ए. पी. एस्. स्वामिनारायणशोधसंस्थान,
अक्षरधाम मन्दिर नव दिल्ली)

●

डॉ. गणेशदत्त शर्मा
(राष्ट्रपति-सम्मान-प्राप्त)
उपाध्यक्ष
दिल्ली संस्कृत अकादमी
(दिल्ली सरकार)

प्लाट सं-5, झण्डेवालान,
करोलबाग, नई दिल्ली-110005
दूरभाष- 011-23635592
मो०- 7838292313

पत्रांक.................. दिनांक..................

# जीवेयुः शरदः शतम्

कविताकामिनीकान्ताः रमाकान्ताः मनीषिणः।
मन्येऽभिनन्दनं तेषां दिव्यगुणाभिवन्दनम्॥
कविताकाकली येषां देशे देशे सुगुञ्जिता।
तेषामभ्यर्चनं नूनं वाग्देवतार्चनं शुभम्॥
विद्याविनयसम्पन्ने येषामोजोमये मुखे।
सदा विभासते सम्यक् शालीनता कुलीनता॥
'भाति मे भारतम्' येषां स्थाने स्थाने प्रगीयते।
यस्मिन् वै प्रस्तुतं साक्षादस्मद्देशस्य गौरवम्॥
परिषत् स्थापिता यैश्च देववाणीति विश्रुता।
दैवीवाचः प्रचाराय सर्वलोकहिताय च॥
स्वयं संस्थासमाः शुक्लाः देवभाषाप्रचारकाः।
स्वात्मनः पितृपादानां पादपद्मानुरागिणः॥
ब्रह्मानन्दसुता मान्या नित्यं ब्रह्मपरायणाः।
ब्रह्मविद्याविदो धन्याः सच्चिदानन्दसाधकाः॥
कुर्वन्तो रचना रम्या गायन्तो गीतिकास्तथा।
संस्कृतं वर्धयन्तश्च जीवेयुः शरदः शतम्॥

RASTRAPATI PURASKARA GRAHITA

SIKSHA SASTRY

**Dr. P.T.G.V. RANGACHARYULU**

B.O.L (Skt), M.A (Tel) M.A (Jyotisha), M.A. Ph.D (Skt)

Acharya (Visistadwitavedanta), M.A (Philosphy) Sahitya Ratna (Hindi)

Sri Surya Sadana Asthanapandita
Suvarna Gandapendera Satkruta
Swarna Ghanta Kamkanalamkruta
Sri. T.S.R Kalapeetha Puraskruta
Daivajna Ratna; Samskruta Kalaprapurna
Maha Kameshwari Puraskara Grahita
Samaikya Bharat Gauravsatkar Grahita (MTA)
Samskruta Basha Dhurina
Navya Satavadhani
Suvarna Surya Pataka Puraskruta

Lecturer in Sanskrit(Rtd)
M.R. Govt Sanskrit College, Vizianagam (A.P)
Programme Officer: N.S.S. Unit
Member: 1) Syllabus Revison Committee,
State Council of Education Research and Training, A.P, Hyd
2) Sanskrit Subject Committee, Board of
Intermediate Education, A.P, Hyderabad
A.I.R, T.V Artist, Poet, Writer & Actor
CENTRAL MEMBER:
Viswa Samskruta Pratishtanam, Varanasi.

Station: Date:..........................

# भाति ते भारतम्

भाति ते भारतं भाति ते भारतं,
भूतले भाति तेऽनारतं भारतम्।।

मारिशस्-ईटली-मेरिका-किंग्डमे
भारते भूयसा भिन्नराज्येषु ते।
काव्यपाठादिकं श्रूयते सर्वदा
धीरवाणी च ते कीर्त्यते सर्वथा।
भाति ते भारतम्..... ॥१॥

सर्वशुक्लोत्तरा, राजधानी च ते
भाति मौरीशसं सर्वशुक्ला च ताः।
मुद्रिताः ख्यातिसम्पादिका गीतयः
सर्वकारैस्सदा संस्तुता गीतयः।।
भाति ते भारतम्..... ॥२॥

नाट्यसप्तात्मकं नाट्यसंदर्शकं
नैकधा प्रस्तुतं रङ्गमञ्चे च ते।
संस्कृताऽकादमी दिल्लिशाखासु ये
संस्तुताः कीर्तिताः श्लाघिताः पूजिताः॥
भाति ते भारतम्..... ॥३॥

ब्रह्मानन्दप्रियंवदासुतममुं गीर्वाणभाषापटुं
शुक्लावंशपयोनिधेः शशधरं कान्तं रमायाश्च तम्।
खुर्जाग्रामविलासभासुरममुं साहित्यसंसेवकं
जैनाचार्यपुराण-रामचरिते बद्धादरं भावये॥४॥

पद्मश्रीशुभलक्ष्मलक्षिततनुः सत्सम्प्रदायं वपुः,
राष्ट्रस्योन्नतशक्तिराष्ट्रपतिना सम्मानितं शाश्वतम्।
'गोविन्दं भज'गीतपाठनपटुः वैविध्यरागेषु यः
'आचार्यो' जयते 'रमालय'प्रभुः वाणीविहारस्थितः॥५॥

सहृदयविधेयः
रङ्गाचार्यः
दूरवाणी-०९४४०४३६५५

●

# अभिनन्दनाष्टकम्

– जि.एस्. श्रीनिवास मूर्तिः,

अभिनन्दामो विनीता अर्वाचीनसंस्कृतपुरोहितम्।
शुक्लोपाह्वं विदुषं श्रीरमाकान्तवर्यम्॥१॥

पञ्चसप्ततिहायनाः गताः सार्थकाः संस्कृतसेवायाम्।
रमाकान्तवर्य! दिशतु श्रीशः भवते शरदां शतम्॥२॥

पद्मश्रीभाजन! जगति प्रसरतु भवतः काव्यसुमामोदः।
भारतजननीवत्साः पिबन्तु सरसं काव्यदुग्धम्॥३॥

नवच्छन्दस्सु नैके काव्यानि रचितानि ललितरम्याणि।
नूत्नविषयेषु भवता नाटकानि हृद्यानि हितानि॥४॥

भवतः शिष्या नैके उपकृताः देशेषु बोभूयन्ते।
अध्यापनकलाकुशल! वर्धतां दिशि दिशि भवद्यशः॥५॥

नवकव्याश्वासकवर! नवरचनासु गुणग्राहिन्! कवयः।
बहवो भवत्कृतज्ञाः कुर्वते हि भवद्गुणगानम्॥६॥

भातु भवतो भारती भारतेऽस्मिन् बहूनि शतहायनानि।
देववाणी भुवि विलसतु देववाणीपरिषन्नेतः॥७।

इतोऽप्यधिकं प्रवर्धतां वाण्याः भवत्सेवा हरिकरुणया।
वितरतु शुभं रमेशः कुशलं सकुटुम्बस्य भवतः॥८॥

( बेंगळूर )

●

# भाति कान्तो रमायाः

- डॉ. नारायणदाशः

भारतीयैर्जनैः पुत्रकैः पौत्रकैः
मातृभूमौ कदा देवभूमौ कदा।
संस्कृतैः शिक्षकैः शिष्यशिष्यान्वितैः
घोषितं सस्वरं भाति मे भारतम्॥१॥

देहलीचत्वरे पुण्यरामालये
यस्य दूरात् सदा काचकाद् दर्शनात्।
यौवते यस्य वै स्रग्विणी रागिणी
सा सदा गुञ्जिता भारते भारती॥२॥

संस्कृतां पत्रिकां मासकानां त्रये
काशयन् पत्रकारश्च संघे सदा।
संघशक्तौ निजां सुप्रभां द्योतयन्
भाति कान्तो रमायाश्च शुक्लाम्बरः॥३॥

यत्र देवी रमा तत्र कान्तस्सदा
देववाण्या रमायुक्तकान्तस्सदा।
तत्र शुक्लात्मजा सर्वशुक्लोत्तरा
राजधानीजनैः पूजिता सत्वरम्॥४॥

देववाणीसभा यत्र कुत्रार्चिता
तत्र शुक्लो वरो भाति नूनं मुदा।
संस्कृताकादमीकाव्यगोष्ठ्यां तथा
भाति ते भारतं वाचितं सर्वदा॥५॥

सा सभा नास्ति भो यत्र शुक्लो नहि
देववाणी न सा यत्र नास्ते रमा
सा न नारायणी काव्यवाणी भवेद्
यत्र शुक्लोत्तरा सप्ततिर्नो भवेत्॥६॥

●

JAWAHARLAL NEHRU UNIVERSITY
Special Centre for Sanskrit Studies
New Delhi-110067. INDIA

Dr. C. Upender Rao
PROFESSOR & CHAIRPERSON

# Best wishes to Sanskrit poet

Dr. Ramakant Shukla is one of the leading Sanskrit scholars of the country. His knowledge of Sanskrit, his poetic prowess and his academic achievements deserve so much praise and appreciation. People know him as a renowned Sanskrit poet due to his well known poem भाति मे भारतम्। But he composed many other Sanskrit poems as well. In fact he is not only a poet, but a best Sanskrit scholar who is विद्यासागर, a vast ocean of wisdom and as tribute to his lotus like personality Indian government has conferred on him the highest award पद्मश्री। in fact he received various other awards too. Yet all those awards are merely small gifts to his highest personality.

Dr. Ramakant Shukla is one of those few scholars of Sanskrit in the country who made a mark in both the fields of scholarship and poetry writing. His works contain some of the most beautiful poems composed in Sanskrit. Unlike some other Sanskrit poets who cannot impress audience by singing their own poetry, he posses an art of presenting his poems in a most befitting and beautiful manner.

Though one of the senior most scholars in the country who is well known to every Sanskritist due to his melodious singing and creative compositions, he never tried for administrative positions like some other Sanskrit scholars of our country who made it as their life ambition and in order to gain it who never hesitated to change their universities and departments, but even their living places and close family members.

I had the opportunity on several occasions to share dignified positions on the dais with him, who is much more senior and wiser than me in every aspect but treats me as his younger brother and beloved friend only because of his friendly nature and loving kindness.

Therefore Dr. Ramakant Shukla certainly deserves the appreciation and congratulations for his pioneering contributions to the field of Sanskrit literature.

Expressing best wishes for his sound health and expecting newer poems from his pen, I remain...

Prof. C. Upender Rao
Chairperson
Special Centre For Sanskrit Studies
JNU, New Delhi

कवयस्सन्ति बहवः संस्कृतस्य धरातले ।
रमाकान्तस्तु सर्वेषु कविमूर्धन्यतां गतः ॥

प्रो. उपेन्द्रराव:
16/12/14

।। श्रीमते रामानुजाय नमः।। ।।श्रीः।। ।।श्रीवेदपुरुषाय नमः।।

# गोविन्दाचार्यः

**अध्यक्षः संस्थापकः सञ्चालकश्च**

**श्रीनिवाससेवार्थन्यास-श्रीनिवाससंस्कृतविद्यापीठयोः**

पत्रसङ्केतः - 174, रामानुजमार्गः, इब्राहिमपुरम्, देहली-110036

सम्पर्कसूत्रम् - +91-9810429487, अणुसंकेतः - s.govindacharya@yahoo.co.in


संस्कृतसपर्यायै समर्पितजीवनानां संस्कृतप्रचारानुष्ठानतत्पराणाम् अनवरतसंस्कृतसाहित्यशास्त्रादिसद्ग्रन्थसेवनपरायणानां धर्मागममर्मपारगाणां विविधविद्याद्योतितस्वान्तानां पुण्यश्लोकानां सुप्रथितयशसां कविसहृदयानां छात्रवत्सलानां मतिमतां विद्वद्धौरेयाणामाचार्यमुकुटमणीनां नैकग्रन्थकर्तृणाम् अर्वाचीनसंस्कृतमाध्यमेन संस्कृतवाङ्मयस्य समेधितृणां सुरभारतीसमुपासकानां राष्ट्रपतिसम्मानसभाजितानां श्रीमतां पद्मश्रीविभूषितानाम्

## आचार्यश्रीरमाकान्तशुक्लमहाभागानां

जगति प्राकट्यस्य पञ्चसप्ततिवर्षसम्पूर्तौ **'श्रीहीरकप्राभृतमि'**त्याख्यः

**आचार्यरमाकान्तशुक्लहीरकजयन्तीसमभिनन्दनग्रन्थः**

प्रकाश्यमानोऽस्तीति संस्कृतसुरभारतीसमुपासकानामस्माकमत्यन्तं मोदावसरः।

श्रीशुक्लमहाभागैः स्वजीवने संस्कृतोत्थानाय यथाशक्ति प्रयतितमस्तीति तेषामधमर्णाः वयं समग्रं संस्कृतजगच्च। अद्यावधि अत्रभवता आचार्येण संस्कृतस्य सपर्यायै किञ्च संस्कृतसम्बद्धानाम् आचार्याणां छात्राणां तथा च संस्कृत-ज्ञानाभावेऽपि संस्कृतसेवानुरतानां संस्कृतप्रेमिणां सहायतायै स्वीयं समग्रमपि जीवनमयापि इति संस्कृतजगतः अमूल्यरत्नभूताः इमे आचार्यचरणाः। अतः आचार्यप्रवराणां हीरकजयन्तीमहोत्सवे अत्रभवद्भ्यो भूयो भूयः समभिनन्दनानि समर्पयन् श्रीलक्ष्मीरमणं सम्प्रार्थये-

**नीरोगी सन् शतञ्जीवी भवेच्छुक्लो रमापतिः।**
**इति कामनया स्तौमि भगवन्तं मुहुर्मुहुः।।**

●

**डॉ. हरिनारायण दीक्षित**
एम.ए. पी-एच.डी.,डी.लिट्, व्याकरणाचार्य
सांख्य-योगाचार्य, साहित्याचार्य, साहित्यरत्न
राष्ट्रपतिसम्मानप्रमाणपत्रपुरस्कारप्राप्त

पूर्व प्रोफेसर एवं संस्कृतविभागाध्यक्ष
पूर्व अधिष्ठाता, कला संकाय
कुमाऊँ विश्वविद्यालय
नैनीताल- 263002 (उत्तराखण्ड)

दिनांक-११.११.२०१५

आदरणीय बन्धुवर,
डॉक्टर रमाकान्त शुक्ल जी!

सप्रेम नमोवाक्

# पुष्पाञ्जलिः

भाति मे भारतं गीत्वा देशे देशान्तरेषु च।
अर्जिता भवता कीर्त्तिर्भारतायात्मने तथा॥१॥

विलिख्योत्तमसाहित्यं संस्कृते भवता तथा।
दृष्ट्यां हि सर्वकारस्य संस्कृतं चोन्नतीकृतम्॥२॥

सेवां संस्कृतभाषायाः कृत्वा सर्वात्मनातुलाम्।
सर्वेषां संस्कृतज्ञानां हृदयं जितवान् भवान्॥३॥

नित्यं प्रकाशितं कृत्वा निजार्वाचीनसंस्कृतम्।
अवापि भवता कीर्तिः समाजे चानपायिनी॥४॥

नाना भव्यान् पुरस्कारान् पद्मश्रीप्रमुखान् सखे!।
लब्ध्वा भवान् यथाकालं नामोच्चैः कृतवान् निजम्॥५॥

अवगच्छन्निदं सर्वं चित्तेऽतिमुदितोऽस्म्यहम्।
भवद्-हीरजयन्त्यां च वर्धापनं ददे हृदा॥६॥

चेतसा भवतश्चाहं विदधाम्यभिनन्दनम्।
सौख्यं च दीर्घमायुश्च कामये चोत्तमं यशः॥७॥

●

# वन्दनीयचरितेषु सारस्वतमूर्धन्येषु महामहिमशालिषु श्रीरमाकान्तशुक्लमहोदयेषु

# अर्घः

– प्रो. डॉ. योगिनी हिमांशुः व्यासः

यन्नामश्रवणेन सत्वरमहो भावो वरीवृध्यते
ब्रह्मानन्द-प्रियम्वदा-प्रियसुतो विद्वज्जनानन्ददः।
अन्ताराष्ट्रियकीर्तिभूषितमहो संशोधने शेवधिः
सोऽयं शुक्लवरो विराजति रमाकान्तोऽभिनन्द्यो मया॥१॥

खुर्जासंस्थितपण्डितस्य सदने जातो बुधो यो महान्
ख्यातिं प्राप्य महीयसीं स्वपितरौ चारित्र्यतः प्रीतवान्।
नानाविश्रुतलोकमान्यपदवीः सर्वोन्नता धारयन्
सोऽयं शुक्लमहोदयो विजयतां सक्तो रसब्रह्मणि॥२॥

कान्तिर्यद्वदने गतिश्चरणयोः श्रीर्हस्तयोः सत्कृति-
र्मस्तिष्के सुमतिश्च वाचि मुदृता यत्र व्यराजन् सदा।
जेजेति स्म यदीयभक्तिरमला देवोच्चये सर्वदा
सोऽयं शुक्लवरः कविर्भुवि सदा रंरम्यतां सस्मितम्॥३॥

ध्यानं चित्तकला च चारु भणितं भव्यं महावैभवं
सद्विद्या च रमा श्रमश्च कठिनः कृच्छ्रं तपः प्रोच्यते।
इत्थं यस्तप आचरत्यपि पुनश्छात्रैः समाचारयन्
शुक्लध्यानपरः स नो गुरुवरः प्रेम्णात्र वावन्द्यते॥४॥

न्याय्यं धर्म्यययथार्थमुत्तमपथं कर्मण्यताप्रेरकं
श्रद्धाचिन्तनभूतिभाविलसितं विज्ञानसेवारतम्।
यत्राभाति विचारचारुचरितं स्मेरं वचः पेशलं
सोऽयं शुक्लमहोदयो विजयतां संवित्प्रभाप्रोज्ज्वलः॥५॥

माधुर्यम्पदगुम्फनेऽनवरतं सारल्यमर्थोद्भवे
दाक्षिण्यं रससंपदत्र विमला नर्नर्ति व्यङ्ग्यान्तरम्।
यत्रैतादृशभारतस्य कवितां यो भावतश्चिन्तयेत्
सः श्रीशुक्लमहोदयो विजयतां पूर्णेश्वरानुग्रहात्॥६॥

यो वर्वर्ति सुपुण्यपुञ्जमहितो चर्कर्ति भद्रं तथा
संख्यातीतसुयोग्यशिष्यनिवहैः संसेव्यमानोऽनिशम्।
यश्चायं गतवानधीतिनिपुणो मौरीशसीयां धराम्
सः श्रीशुक्लमहोदयो विजयतां पूर्णेश्वरानुग्रहात्॥७॥

ग्रन्थार्थाकलनप्रभाविलसितप्रज्ञाधनप्राञ्चिताः ,
हर्षोत्कर्षप्रवर्धना गुणगणाः सत्कर्मचुञ्चुप्रियाः।
स्नेहाभाधृतिकान्तिशान्तिसलिलैः सिक्ताः सुसौम्या इमे
श्रीमच्छुक्लमहोदया गुरुवरास्तन्वन्तु निःश्रेयसम्॥८॥

गाँधीनगरम्
दिनांकः – १८.११.२०१५

●

# रमाकान्तं सदा मन्महे

-गौतम पटेल

ब्रह्मानन्दसुतेन शुक्लमखिलं कार्यं कृतं जीवने
माता या प्रियवादिनी मुदमयी जाता कृतार्था धुना।
खुर्जायां जनिलाभमस्य विमलो प्रज्ञाप्रसादैर्युतः
तं तं शुक्लमहोदयं कविरमाकान्तं सदा मन्महे॥१॥

प्राप्तं स्वर्णपदं च शास्त्रविषये चूडामणिश्चार्जितः
विद्यायां रतिरेव पूर्णविमला कार्यं सदैवोत्तमम्।
देशे यस्य विभाति काव्यवनिता रम्यातिरम्या सदा
तं तं शुक्लमहोदयं कविरमाकान्तं सदा मन्महे॥२॥

साहित्ये सुकुमारवस्तुनि भुवि प्रज्ञायुता निर्मला
वाणी यस्य विलासभावमधुरा लीलायते प्रोज्ज्वला।
भाति मे हृदि भारतं च विमलं यस्य प्रसादैः पुनः
तं तं शुक्लमहोदयं कविरमाकान्तं सदा मन्महे॥३॥

देशे पश्य विदेशमध्यसकले स्थाने सदा शोभितः
काव्ये चापि विवेचने च मधुरं लीलायितं सर्वदा।
आः सर्वत्रगभीरभव्यकवितासंचारणे सिंहवत्
गर्जितं कविगोष्ठीचालनविधौ संस्मर्यते चाधुना॥४॥

देवस्ते सविता तनोतु विमलां कीर्तिं सदा शाश्वतीं
गेहे ते च करोतु विष्णुदयिता वासं मुदा शाश्वतम्।
धन्यास्ते च गृहे भवन्तु मुदिताः सर्वे सुखैरन्विता
जीयाद् वर्षशतं कविवरमहो शुक्लो रमाकान्तिमान्॥५॥

●

# शुभकामना-सन्देश

**- कैलाशनाथद्विवेदी**

हमें यह जानकर परम प्रसन्नता हुई कि वाग्देवी के अप्रतिम आराधक, हिन्दी-संस्कृत के श्रेष्ठ कवि, 'अर्वाचीन संस्कृतम्' के लब्धप्रतिष्ठ सम्पादक, अनेक विश्रुत-महत्त्वपूर्ण कृतियों के विख्यात रचनाकार, बन्धुवर 'पद्मश्री' डॉ. रमाकान्त शुक्ल अपने यशस्वी जीवन में पचहत्तर वासन्तिक वर्ष संजोकर लोकमानस को सुरभित कर रहे हैं।

देववाणी परिषद्, दिल्ली की ओर से इनके आत्मिक अभिनन्दन एवं सम्मान में एक स्तरीय अभिनन्दन ग्रन्थ प्रकाशित होने जा रहा है, यह परम प्रमोद का विषय है। इससे डॉ. शुक्ल का चुम्बकीय विराट् व्यक्तित्व तथा स्तरीय कृतित्व साहित्य जगत् में और भी अधिक उजागर होगा।

इस प्रकाश्य अभिनन्दन ग्रन्थ के सफल प्रकाशन की कामना के साथ प्रभु से प्रार्थना करता हूँ कि डॉ. शुक्ल और अधिक यशस्वी होकर स्वस्थ दीर्घायुष्य पाकर माँ सुरभारती के अंचल को अनेक काव्यकृति प्रसूनों से भरकर सुवासित करते रहें।

●

# शुभकामना-सन्देश

**- प्रभुनाथ द्विवेदी**

मुझे यह जानकर अतीव प्रसन्नता हुई कि पद्मश्री **आचार्य रमाकान्त शुक्ल जी** का अभिनन्दन-ग्रन्थ प्रकाशित हो रहा है। आचार्य श्रीशुक्ल जी मेरे आत्मीय बन्धु हैं और मैं सदैव उन्हें अग्रज-सम्मान देता हूँ। इनका अनुपम व्यक्तित्व और कर्तृत्व संस्कृत-हिन्दी-जगत् में सर्वविदित है। सुकुलोत्पन्न शुक्लवंशावतंस आचार्य शुक्ल जी स्वनामधन्य पूज्य पिता के सुयोग्य पुत्रों में वरेण्य हैं।

आचार्य रमाकान्त शुक्ल जी ने अपनी उत्कृष्ट रचनाओं से सारस्वत साधना का प्रतिमान प्रस्तुत किया है। इनके गीत संस्कृत साहित्य के समुज्ज्वल रत्न है। इन्होंने न केवल स्वदेश अपितु विदेश में भी अपने मधुर स्निग्धगम्भीर कण्ठ से गीतों की ललित प्रस्तुति द्वारा सहृदयों के हृदय में स्वयं को प्रतिष्ठित कर दिया है। साहित्यसर्जना एवं पत्रकारिता के माध्यम से आचार्य शुक्ल जी देववाणी की जो अमूल्य सेवा कर रहे हैं, वह स्तुत्य है। संस्कृत के लिए समर्पित आचार्य शुक्ल जी युवा रचनाकारों के प्रेरणास्रोत हैं।

प्रकाशनार्थ सद्यःसज्जित यह अभिनन्दन ग्रन्थ आचार्य रमाकान्त शुक्ल जी की संस्कृतसपर्या का पर्याय बने- यही मेरी शुभकामना है। भगवान् काशी विश्वनाथ से मेरी अभ्यर्थना है कि वे पद्मश्री विभूषित आचार्य रमाकान्त शुक्ल जी को दीर्घायु एवं यशस्वी बनायें।। इति शम्।।

●

# आचार्य डॉ. रमाकान्तशुक्लप्रशस्तिः

डॉ. गोकुलेन्द्रनारायणदेवगोस्वामी

ब्रह्मानन्दगृहे रम्ये यजुर्वेदपरायणे।
शुक्लमतान्वये ख्याते चोत्तमे विप्रवंशके॥१॥

संस्कारकारिणां गेहे भारतकीर्त्तिमण्डितः।
संस्कृते परिवारे हि संस्कृतिर्मण्डिते परे॥२॥

रमाकान्त इति ख्यातः चोमाकान्तस्य सोदरः।
जातश्च तीक्ष्णधीर्लोके संस्कृतकान्तिवर्धनः॥३॥

देवताभिश्च सृष्टो वै सुकविर्देशभूषणम्।
बहुविद्यां समाश्रित्य राष्ट्रगौरवहेतुना॥४॥

कापिले मतविख्याते पातञ्जले कृतश्रमः।
साहित्ये शब्दविद्यायां चार्वाचीने हि संस्कृते॥५॥

देववाणी कृतिर्यस्य परिषद् बहुविश्रुता।
भारतजनताहञ्च भारतजनप्रीतये॥६॥

'भाति मे भारतं' चैव भारतप्रीतिदायिनी।
स्रग्विणीवृत्तराजेन ग्रथितं भावगुञ्जितम्॥७॥

कवितावल्लरी हृद्या देशभक्तिसुमण्डिता।
कवित्वं विस्तृतं लोके विशालमेधामण्डितम्॥८॥

भाषासु पाटवं यस्य हिन्द्यां संस्कृते यथा।
रचने दक्षता ग्राह्या गीते चैव ततोऽधिकम्॥९॥

संस्कृतभाषणे दक्षं कविवर्यं नमाम्यहम्।
रमाकान्तं सदा नौमि हृत्पुष्पसरोजेन शम्॥१०॥

शुक्लं कविवरं धन्यं कालिदासोपमं बुधम्।
वामे देवी रमा यस्य रमाकान्तं नमाम्यहम्॥११॥

विविधविबुधे ख्याते स्कन्धावारो रमालये।
देववाणीहिते रम्ये रमालयो महीयताम्॥१२॥

कवित्वे पाटवार्थं वै पद्मश्रीः शासनेन शम्।
राष्ट्रपतिप्रदत्तेन सम्मानेन विभूषितम्॥१३॥

वर्धापनं सादरं हि सम्मानं प्रीतिपूर्वकम्।
जन्मदिवसवेलायां भक्तिप्रणतचेतसा॥१४॥

प्रतिष्ठायाम्,

प्रो. इच्छारामद्विवेदी

प्रधान-सम्पादकः 'श्रीहीरकप्राभृतम्'

सादरं नमामि।

भवन्तः **श्रीहीरकप्राभृतमि**'ति प्रकाशयिष्यन्तीति अस्मत्कृतेऽतीव आनन्ददायकम्। अनेन सहैव सन्देशमपि कृपया स्वीकुर्वन्तु इति सादरं प्रार्थये, ये प्रमादाः सन्ति ते हेयाः। भवन्तः कृपया शुद्धीकुर्वन्तु इति प्रार्थये। अनावश्यकवस्तूनि च इतः कृपया त्यजन्तु।

पुनश्च सादरं नमामि।

भावत्कः स्नेहधन्यः

**- गोकुलेन्द्रनारायणदेव गोस्वामी**

कृष्णकान्तसन्दिकैशासकीयसंस्कृतमहाविद्यालय

गुवाहाटी- ७८१०१४

दूरवाणी-०९८६४१२६४२६

●

# स्याच्चिरायू रमाकान्तशुक्लो भुवि

- डॉ. नवलता

रत्नानि महान्ति दधाति सदा नामार्थवती या वसुन्धरा।
तेषामभिराममयशो विमलं भुवि शाश्वतिकं गीयते सदा॥

तेष्वन्यतमः परिपुष्टयशा गीर्वाणगिरोपासने रतः ।
कविवर्यरमाकान्तः शुक्लः नूतनरचनाभिः प्रतिष्ठितः॥

माता यस्यासीत्पुण्यवती पुत्रं जनयित्री प्रियंवदा।
श्रीब्रह्मानन्दः पितृपादः येनात्मजेन तोषितो मुदा॥

दत्तः कुबेरव्याकरणगुरुः पदशास्त्रमवाप यतो भव्यम्।
परमानन्दात्कुलगुरोस्तथा पितृपादेभ्यः स हि साहित्यम्॥

संस्कृतभाषागतसाहित्यं गुरुचरणगतोऽधीतवानसौ।
गैर्वाणीवाङ्मयपीयूषं भूयो भूयः पीतवानसौ॥

सम्पादनमनुवादो भाष्यं नाट्यं गद्यं पद्यं वार्ता।
लेखनी प्रवृत्ता यशस्विनी विविधासु विधासु च विख्याता॥

कण्ठे विराजते स्वरदेवी शारदा वाचि दृशि वै तेजः।
भव्यं व्यक्तित्वं महाशयस्यानने किमप्यद्भुतमोजः॥

'अभिशापं' 'पुरश्चरणकमलम्' 'आशाद्विशती' 'शुचिगान्धीयम्'।
'वसुमतीशतक'मिति 'जयभारतभूमे' अथ 'पण्डितराजीयम्'॥

'मम जननी' 'भारतजनताहं' सिद्धार्थराजधानीरचनाः।
रसमयमधुकाव्यकोशभरिता रचनाधर्मी शुचिसौम्यमना॥

शतशो गीतानि शोधलेखानष्टादशमौलिककाव्यकृतीः।
रचयित्वावाप यशो विमलं संस्कृतसेवार्थं दृढव्रती॥

भारतभारतीसुतस्तादृक्पूर्णायुरवाप्य विजित्य गदम्।
वाङ्मयकोशं संवर्द्ध्य सदा लभतामक्षय्यसुखामोदम्॥

'भाति मे भारतं' 'भाति मौरीशसं'
'सर्वशुक्ला' तथा 'सर्वशुक्लोत्तरा'।
शस्यते यस्य काव्यं सुधीसेवितं
स्याच्चिरायू रमाकान्तशुक्लो भुवि॥

●

**Prof. RADHAKANT THAKUR**
Professor, Dept. of Jyotisha
&
Dean, Academic Affairs

**RASHTRIYA SANSKRIT VIDYAPEETHA**
(University established u/s 3 of UGC Act, 1956)
TIRUPATI - 517 507 (A.P.)
Mobile : 9989304975
☎ 0877 - 2286600
e-mail : radhakant_thakur@yahoo.com

# सभाजयामः कविराजशुक्लम्

उपाधिभिर्वा विरुदैरनेकैः
सम्मानितो यो बहुधापि देशे।
पद्मश्रिया चैव विभूषितो यः
शुक्लो रमाकान्तमहोदयोऽस्ति॥१॥

विपश्चितं सुन्दरदीर्घगात्र-
माचार्यवर्यं परिशुद्धचित्तम्।
दिल्लीनगर्याञ्च विराजमानं
सभाजयामः कविराजशुक्लम्॥२॥

गीर्वाणवाण्याश्च विकासहेतोः
प्रकाशहेतोरपि पण्डितानाम्।
वदन्तु भूमौ कतिमा लसन्ति
यथा यतन्ते मनसा भवन्तः॥३॥

नाकर्णितं केन सुधीवरेण
गीतं पुनर्यत्कविकोकिलेन।
आभारतं तत्कविताविलासः
विभाति मे भारतमेकपद्यम्॥४॥

कवेः कवित्वं भवदीयसर्वं
श्रुतं कविभ्यो मयकादरेण।
पदेन किं वा खलु चामरेण
दिल्लीनगर्यां धरणीधरोऽस्ति॥५॥

नमाम्यहं सम्प्रति पद्यपुष्पैः
शुक्लं रमाकान्तकविं कवीन्द्रम्।
विलासमानं सततं सभायां
शिष्यैः प्रशिष्यैरपि सेवमानम्॥६॥

●

डॉ. जीतराम भट्ट
सचिव
दिल्ली संस्कृत अकादमी
(दिल्ली सरकार)

कार्यालय-
प्लाट सं-5, झण्डेवालान,
करोलबाग, नई दिल्ली-110005
दूरभाष-011-23635592, 23555676
मो.- 0-9990979111

दिनांक.........04.12.15

पत्रांक..............1054

# शुभकामना:

हर्षप्रकर्षस्य विषयोऽयं देववाणीकविपुङ्गवानां सुरभारतीसमुपासकानां राजधानीशिक्षाकुलाचार्याणां वाणीविहारवास्तव्यानां पद्मश्रीविभूषितानां श्रद्धेयानां श्रीमतां डॉ. रमाकान्तशुक्लवर्याणां हीरकजयन्तीमुपलक्ष्याभिनन्दनग्रन्थः प्रकाश्यते। एतदर्थमायोजनसमितेः सर्वेऽपि सदस्याः कार्यकर्तारश्च वर्धापनार्हाः सन्ति। दिल्लीसंस्कृत-अकादम्याः विविधेषु कार्यक्रमेष्वन्यासां संस्थानामपि सारस्वतानुष्ठानेषु डॉ. शुक्लवर्याणां सन्निधिः त्रिंशद्वर्षेभ्यः सततरूपेण मया प्राप्यते, तेषां स्नेहसंवलितवाग्व्यवहारः सदैव मनसि निर्मलमानन्दममन्दं जनयति। सुविदितमेव मधुमधुरभावान्विताः कर्मठाः सुविज्ञाः कविश्रेष्ठाः डॉ. रमाकान्तशुक्लमहोदयाः संस्कृतभाषायाः प्रसाराय सदैव सन्नद्धाः सन्ति। भूयश्च शरदः शतादित्याप्त-वाक्यमनुस्मरन्नहमेवं कामये-

**काव्यसाहित्यशास्त्रादिनां ज्ञानिने**
**सत्यशोधार्थिने पत्रकाराय वै।**
**श्रीरमाकान्तशुक्लाय वै सादरं**
**हीरकाब्दस्य वर्धापनं मंगलम्॥**

**भावनाभूषितः भव्यभाषान्वितः**
**'भाति मे भारतं' गीतिसंगायकः।**
**देववाणीकविः संस्कृतेर्भास्वरः**
**सर्वदा भारतीं सेवमानो जयेत्॥**

संस्कृतभाषायां भासमानानां विद्यानां प्रसाराय संप्रवृत्तविदुषां श्रीमतां डॉ. रमाकान्तशुक्लमहोदयानामभिनन्दनप्रकाशनावसरेऽस्मिन्नहं स्वकीयाः मङ्गलान्विताः शुभकामनाः वितनोमि।

भावत्कः
(हस्ताक्षर)
जीतरामभट्टः

**Dr. Lalit Kumar Gaur Acharya**
**Professor & Chairman**
Dept. of Sanskrit, Pali & Prakit
Director
Institute of Sanskrit & Indological Studies
Kurukshetra University, Kurukshetra.

#777/8, Partap colony,
kurukshetra - 136118
lk.gaur@rediffmail.com
Phone 09355271482

# शुभाशंसा:

दिल्लीविश्वविद्यालयान्तर्गतराजधानीकॉलेजात्प्राप्तावकाशान् विश्व-प्रसिद्धकवीन् डॉ. रमाकान्तशुक्लमहाभागानधिकृत्य साम्प्रतं हीरकजयन्त्यवसरे प्राकाश्यं नीयमानोऽयमभिनन्दनग्रन्थोऽस्मच्चेतः प्रसन्नतायाः पराकाष्ठां प्रापयति।

डॉ. रमाकान्तशुक्लाः विद्वद्वरेण्याः संस्कृत-हिन्दी-अध्ययनाध्यापन-लेखनसम्पादनक्षेत्रे प्रकाशनक्षेत्रे चापि लब्धख्यातयः स्वतपसा स्वावदानेन च सर्वथाभिनन्दनीयाः इत्यस्मिन् विषये नास्ति सन्देहस्य लेशावकाशः। एतत्कृतेऽभिनन्दनग्रन्थसम्पादनप्रकाशनसमितिसदस्याः सर्वदा साधुवादार्हाः। यता हि एतादृशानां विदुषामभिनन्दनेन यत्रैकतस्ते स्वसत्कर्मसातत्यमभिरक्षितुं लब्धप्रोत्साहनाः स्वतपसा नैरन्तर्यं धारयितुं स्वात्मसमर्पणभावेनावाप्तप्रेरणाः भवन्ति, तत्रैवापरतोऽन्तर्भाविसमुदीयमानचेतास्तरुणाः युवानश्चापि स्वसाहित्यजीवने धौर्येण तपांस्याचरितुं सद्धर्माणि सम्पादयितुमभिप्रेरणमवाप्नुवन्ति। मूलतस्तु गुणग्राहिण अभिनन्दनकर्त्तारः दुर्लभाः। विशेषतश्चास्मिन् दुराचारमये कृतघ्नतापरीते दुर्जनप्राये च कराले कलिकाले ते दुर्लभतरा एव सन्ति। अतः ये सज्जनाः पूतमेतत्सुकृत्यं सम्पादयन्ति, ते मनीषिणां माननीयाः मूर्धन्याश्च वर्तन्ते।

जगन्नियन्तुः पार्श्वे यद्वा तच्चरणयोरियमस्माकमभ्यर्थना यदि मे महनीयाः विद्वांसः निरामयाः सन्तः, केवलं लोकसंग्रहबुद्ध्या काव्ययोगं सम्पादयन्तः स्वनियोगमशून्यं कुर्वाणाः शताधिकं जीवनं लभन्तामिति शम्।

ललितकुमारगौडाचार्यः

(ललितकुमारगौडाचार्यः)

●

# सुखमस्तु समेषाञ्च श्रीरमाकान्तदर्शनात्

- बलदेवानन्दसागरः

श्रीरमाकान्तशुक्लोऽयं भारते भातु सर्वदा।
भाति मे भारतं चेति रम्यकाव्यविशारदः॥१॥

अर्पितं जीवनं येन गैर्वाणी-समुपासने।
परिषद् देववाणीति प्रतिष्ठापितवान् पुरा॥२॥

पण्डितराजमाधृत्य नाटकमलिखत् सुधीः।
जगन्नाथस्य वै यस्मिन् सकलं जीवनं ध्रुवम्॥३॥

सम्माननं च संघर्षं वर्णितं सरलया गिरा।
पुनस्तस्य प्रयोगं हि रङ्गमञ्चीयमद्भुतम्॥४॥

व्यदधाद् राजधान्यां च मादृशैः सखिभिः सह।
नाटकान्यनेकानि ततो रचितवानसौ॥५॥

श्रावितानि नभोवाण्या रङ्गार्थं दर्शितानि च।
लोकप्रियाणि जातानि नाट्यवस्तु-सुगौरवात्॥६॥

त्रैमासिकं प्रियं पत्रं, ततोऽर्वाचीनसंस्कृतम्।
अमुना पत्रकारेण प्रकाशितं हितकाम्यया॥७॥

संस्कृत-सेवनं ह्यस्य संवीक्ष्य निष्ठया द्रुतम्।
भारत-सर्वकारेण पद्मश्रीति उपाहृतम्॥८॥

दीर्घ-जीवनमस्याऽहं प्रार्थयेऽनामयं हृदा।
सुखमस्तु समेषाञ्च श्रीरमाकान्तदर्शनात्॥९॥

●

# अभिनन्दनम्

- डॉ. सुधांशु चतुर्वेदी

जीवतात् शरदां शतं
हीरकः शुक्लः
प्रो. रमाकान्त शुक्लः।
हीरकजयन्त्यां मान्यते
भारतभारती-गायकः।
श्रीरमाकान्तशुक्लोऽयं
प्रसिद्धः संस्कृतसेवकः।
पद्मश्रीरिति विरुदेन।
भारतशासनमानितः।
सुविद्वद्वंशसमुद्भूतः
राष्ट्रपतिसम्मानभूषितः।
सुधांशुचतुर्वेदिना
तस्य महिमा प्रगीयते।
तद्वंशीयैः सुकृतैः पुण्यैः
पुण्यपूतेन सुबन्धनः॥
भवेत्सदाखिले जगति
सतां संसदि सुपूजितः
शुभाशंसां करोम्यत्र
सुधांशुचतुर्वेदी मुदा।

●

पण्डितरमाकान्तशुक्लमहोदयसख्यभावविभूषितस्य
कर्नाटकसंस्कृतविश्वविद्यालयवेदान्तनिकायाध्यक्षस्य
पण्डितपाण्डुरंगीवीरनारायणाचार्यस्य शुभकामनासहिता

# रमाकान्तशुक्लप्रशस्तिः

राराजते रमाकान्तः शुक्लरूपस्सतां मतः।
राजधान्यां संस्कृतस्य सेवासंसक्तमानसः॥

आङ्ग्लीबालाकरालेऽस्मिन् काले दुर्बुद्धिबाहुले।
प्रौढगीर्वाणसंसेव्यवाणीविहरणादयम् ॥

देववाणी-परिषदा देववाणीनिषेवकः।
निशेवितः कवीन्द्रैश्च कवीन्द्राणां निषेवकः॥

मानितो राष्ट्रपतिना पद्मश्रीसमलंकृतः।
कविरत्नं नारदार्यस्तथा कविशिरोमणिः॥

सम्राट्कविवरश्चायं नानोपाधिविभूषितः।
गीर्वाणकविताप्राणवल्लभार्चनतत्परः ॥

तिरस्कृताशेषभाषावारकन्यासुपूजितः ।
ज्ञानेन तपसा चैव पञ्चसप्ततिवर्षकः ॥

लग्नस्संस्कृतसेवायामुत्साहे पञ्चविंशकः।
जीयाच्चिरं शतायुस्सन् देववाणीं निषेवताम्॥

तदीयमित्रतालाभपरसौभाग्यवान्मुदा ।
आशास्ते हि चिरायुष्यं वीरनारायणस्सुधीः॥

इत्थमेवाभिनन्दन्ति रमाकान्तसुमेधसम्।
शुभकामनया नित्यं बेंगलूरुबुधास्सदा॥

●

محمد पुमान् पुमांसं परिपातु विश्वतः الله

(मनुष्य ही मनुष्य का सब प्रकार से रक्षा करे)

**Dr. Muhammad Hanif Khan Shastri**
Asstt. Professor
*Honoured by Vedang Vidwan Samman Winner (Govt. of India)*
*National Communal Harmony (Govt. of India) &*
*National Eminence Award (SIES, Mumbai)*

Ref:..................................  Date: 3-12-015

मात्र हिन्दी संस्कृत जगत् ही नहीं, मात्र 'भाति मे भारतम्' तक ही नहीं, बल्कि बृहत्तर भारतीयतामयी काया से शोभायमान श्रीमान् विद्वान् पण्डित डॉ. रमाकान्त शुक्ल जी की हीरकजयन्ती के अभिनन्दनीय अवसर पर उनके आलातरीन बुलन्द मुकाम की बहबूद के लिए दिलो जान से दुआ-गो हूँ और इलतीज़ा है पाक परवर दिगार से कि सिर्फ हीरकजयन्ती ही नहीं बल्कि उनकी कोहिनूर हीरक यों में बिलादत जस्न-ए मुबारक हमें अता करें।

**- मोहम्मद हनीफ खान शास्त्री**

●

# श्रीरमाकान्तशुक्लगद्यकुसुमहारः

## अभिनन्दन-पत्रम्

ब्रह्मानन्दोदरस्थामृतपानकृतविबुधावयवानां विविधविद्याविनोदचतुराणां साहित्याद्यनेकशास्त्राङ्गणक्रीडितकलेवराणां नानाशास्त्र-शास्त्रार्थप्रलब्धप्रकृष्ट-विजयानां धीरगभीरचित्तानां विदितवेदितव्यानां काव्यकाननकवनकालकूजित-पुंस्कोकिलानां पदवाक्यप्रमाणपारावारीणानां निगमागमसञ्चरितसुलभसत्कृत-सन्मानसानां निखिलनिःस्वार्थोज्ज्वलचरित्रोपास्यपवित्रितभूदेवानाम् आश्चर्य-चारुचर्चितचमत्कारचारित्रव्रतानां काव्योद्यानकवलितकुसुमगन्धलुब्धभ्रमरायमाणानां विख्यातविद्वत्सन्दोहसमाराधितशेमुषीणां देशविदेशेषु सम्यक्ख्यातयशोगाथानां सर्वानन्दसहस्रकुम्भनिःसृतामृतपानद्वारापरितृप्तचित्तानां सततसारस्वतोल्लासकानां विश्वाधर्मपङ्कक्षालनजातपवित्रतमातिशुद्धविग्रहाणां परमप्रातिभप्रभापूरित-पावनीकृतकवनकर्मपटूनां श्वेतैश्शोभितशारदेन्दुसदृशशुक्लायमानानां 'भाति मे भारतम्'भणितिभारतराष्ट्रकविहारभूषितानां 'पद्मश्रीः' श्रीरमाकान्तशुक्ल-कविकुञ्जराणां करकमलयोः समर्पितमत्यन्तपूज्यताप्रसन्नं पवित्रमर्चनीयं चाभिनन्दनपत्रम्।

**अयोग्योऽहं च योग्यस्त्वं योग्यानन्दस्वरूपिणम्।**
**वन्देऽहं योग्यतापात्रं सुयोग्यं कुरु मे सदा॥**

एषोऽस्म्यहं श्रीवैद्यनाथचरणाम्भोजभ्रमरायमाणो भारतभारतीसमाराधको देवघरवैद्यनाथधामस्थो झोपाख्यः कुमारपङ्कजः ।

●

वाणीनिकुञ्जविहारव्यसनिषु स्मृतिमात्रमारुह्यापि अनुरक्तेषु निर्भरमानन्दमातन्वत्सु पूज्येषु श्रीरमाकान्तशुक्लचरणेषु सादरभरम् अभ्यर्पितम् आंग्लनववर्षमुपलक्ष्य

# शुभकामनाकुसुमम्

**नैरुज्यं वपुषो, दिशासु सकलास्वव्याहतं सद्यशः**
**कारुण्यार्द्रदृशः सुधाकणवृषो मातुर्धियः सश्रियः।**
**शान्तिं सद्मनि, कान्तिमप्रतिहतां संसत्सु विद्यावतां**
**वर्षं वर्षतु नव्यमव्यवहितं भव्यं सदा श्रीमताम्॥**

**श्रैमत्कः**
**परमानन्दः**
१५-१-०२

●

# नमामि शुक्लं रमाकान्तम्

- रौनककुमारः

सर्वदैव परहिते कृताभियोगं
स्नेहकारुण्यौदार्यादिगुणैर्युक्तं
मातू रमायाः कान्तं
नमामि शुक्लं रमाकान्तम्॥१॥

दाक्षिण्यं स्वजनेभ्यः,
दया परजनेभ्यः
इति श्रुतं मया, परम्
सर्वेभ्यः दाक्षिण्ययुक्तं
नमामि शुक्लं रमाकान्तम्॥२॥

जरामरणभयरहितम्
सुकविम्
स्रग्विणीराजराजम्
नमामि शुक्लं रमाकान्तम्॥३॥

(शुक्लशब्दोऽत्र श्लेषपरः, कविवरस्य चरित्रविद्ययोः शुक्लवर्णमिव उज्ज्वलतामभिधानञ्च प्रतिपादयति अतः पृथग्गृहीतः।)

●

# अभिनन्दन

- डॉ. साधना देवेश

सागरपन्छी...
साहिलों की
हवाओं के गुणग्राहक,
मेरी शुभेच्छाओं के वाहक,
अपनी उड़ानों में
भर लाए हैं
जुगनुओं की रात की सुहानी भोर,
उजास का समन्दर
हलराता है
अनदेखे?
सुरमई दरख़्तों की
अनगिनत
इच्छाएँ....
आशाएँ...
कामनाएँ...
क्षितिज पर
चिटख कर
फूटती हैं धूप की कोंपल
नए ऋतुरंग में
लिये संग में
अनन्त शुभकामना।

(इन्दौर म. प्र.)

●

RNI No. DELSAN/2014/55803 ISSN 2349-0586

॥ श्रीमते रामानुजाय नमः॥ ॐ ॥ श्रीवेदपुरुषाय नमः॥

# संस्कृतवाणी

पाक्षिकसंस्कृतपत्रम्

प्रकाशकीयकार्यालयः एवं सम्पादकीयकार्यालयः - १७४, रामानुजमार्गः, इब्राहिमपुरम्, देहली-११००३६
सम्पर्कसूत्रम् - 9810429487, 9818378284, 8588850551, Email: sanskritvanee@gmail.com

क्र.सं. SV/2015/Letter/024 दिनाङ्कः - 01.12.2015

नाहं संस्कृतजगति तावान् प्राचीनः परं यदाहम् अत्र सम्प्राप्तः तदाप्रभृति छात्राणाम् आचार्याणाम् अन्येषां वा संस्कृतप्रेमिणां मुखेभ्यः एकमेव नाम मया विशेषतः अश्रावि, तच्च वर्तते श्रीरमाकान्तशुक्लः। परमसौभाग्यं मे यद् अहं पितृपादानां **श्रीगोविन्दाचार्यवर्याणां** माध्यमेन अत्रभवन्तं **आचार्यश्रीरमाकान्तशुक्लमहाभागं** मिलितवान्। तद्दिनाद् अद्य यावद् आचार्याणां निर्देशैः अहं कार्यं कुर्वन्नस्मि। अहर्निशं ग्रन्थलेखन-सम्पादनादिकार्याणि सम्पादयन्तः आचार्याः मामपि सततं प्रेरयन्ति। आत्मानं गौरवास्पदमनुभवामि यदहम् अत्रभवतां सान्निध्यं शिष्यत्वं च अवाप्नुवम् इति। महत्प्रमोदावसरः यद् अस्मदाचार्याणां **हीरकजयन्ती** समामन्यमानास्तीति। अस्मिन्नवसरे प्रकाश्यमानग्रन्थस्य **श्रीहीरकप्राभृतम्** इत्याख्यस्य सम्पादने किञ्चित्कैङ्कर्यं विधातुं भगवतः प्रेरणया ग्रन्थप्रकाशनसमित्या मह्यं सह-सम्पादकत्वस्य यद्दायित्वं प्रदत्तं तत्र अवश्यमेव श्रीशुक्लगुरुचरणानां अनवधिककृपा एव विद्यते। श्रीशुक्लमहाभागैः सह मम शिष्यगुरोस्सम्बन्धोऽपि मम पूर्वजन्मनः कृतसत्कृतेरेव फलम्। महोत्सवेऽस्मिन् कर्तुम् अकर्तुम् अन्यथाकर्तुं समर्थः परमात्मा श्रीमन्नारायणः सम्प्रार्थ्यते यत् सः अस्मै आचार्याय दीर्घायुष्यं सुस्वास्थ्यञ्च प्रयच्छत्विति।

JSharma

जीवनशर्मा
सम्पादकः, संस्कृतवाणी
(पाक्षिकसंस्कृतपत्रम्)

RNI No. DELSAN/2014/55803 ISSN 2349-0586

॥ श्रीमते रामानुजाय नमः॥ ॥ श्रीवेदपुरुषाय नमः॥

पाक्षिकसंस्कृतपत्रम्

प्रकाशकीयकार्यालयः एवं सम्पादकीयकार्यालयः - १७४, रामानुजमार्गः, इब्राहिमपुरम्, देहली-११००३६
सम्पर्कसूत्रम् - 9810429487, 9818378284, 8588850551, Email: sanskritvanee@gmail.com

क्र.सं. SV/2015/Letter/024 दिनाङ्कः - 01.12.2015

संस्कृतजगति नास्ति नैयून्यं कवीनां न वा अन्येषां विदुषां परन्तु तत्तच्छास्त्रनिष्णाताः सन्तोऽपि अहर्निशं संस्कृतसपर्यामात्रैकलक्ष्यत्व-संस्कृतप्रचारनिरतत्व-कर्मठत्व-छात्रवत्सलत्वादिगुणसमवेताः विरला भवन्ति। तादृशेषु महाविद्वत्सु अन्यतमाः वर्तन्ते अस्माकम् आचार्याः परमकृपालवः श्रीमन्तः रमाकान्तशुक्लमहाभागाः। बाल्यावस्थायां विविधप्रतियोगितासु निर्णायकत्वेन यान् आचार्यान् पश्यामि स्म तेषां विषये पूर्णतः परिचयो मया पश्चाद् अवापि। एते हि यथा **भाति मे भारतम्** इत्यादिलोकप्रियगीतीनां रचयितृत्वात् कविषु ख्यातयशस्कास्तथैव छात्रवात्सल्य-परोपकारित्वादिगुणयुक्ताः सन्तः न केवलं संस्कृतजगति लोकप्रियाः वर्तन्ते अपितु संस्कृतज्ञानाम् आधारस्तम्भभूतत्वेन विराजन्ते। अत्रभवतां प्राकट्यस्य पञ्चसप्ततिवर्षपूर्त्यवसरे हीरकजयन्तीमहोत्सवम् समामनन्तो वयं चेतसि महानन्दम् अनुभवामः। अहं परमात्मानं सम्प्रार्थये यत् परमकारुणिकस्य तस्य कृपया अस्माकम् आचार्यचरणाः नीरोगिनः सन्तः शरदः शतं जीवेयुः।

लक्ष्मी शर्मा
प्रधान-सम्पादिका, संस्कृतवाणी
अतिथि-अध्यापिका, व्याकरणविभागे
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली।

●

सत्यनिष्ठा जयेल्लेखनी निर्भया
संस्कृत-संवादः
पाक्षिकसंस्कृतपत्रम्
RNI NO.: DELSAN/2011/38660

संपादकीयकार्यालयः
ए 2/32, वजीराबाद मार्गः,
भजनपुरा, देहली-110053
दूरभाषः 09311086751, 09990774061
ई-मेलः sanskritsamvad@gmail.com

क्रमांकः

दिनांकः 1-12-2015

सेवा में,

**माननीय, डॉ. इच्छाराम द्विवेदी जी 'प्रणव'**
प्रधान सम्पादक तथा संयोजक
**आचार्य रमाकान्त शुक्ल-हीरक जयंती-शुभानन्दन ग्रंथ समिति**
आर-६, रमालाय, वाणी विहार, उत्तम नगर
नई दिल्ली-११००५९

महोदय

सुखद अनुभूति का विषय है कि **'पद्मश्री'** सम्मान से अलंकृत, राष्ट्रपति सम्मान प्राप्त संस्कृत कवि, सम्पादक एवं अनेक ग्रंथों के रचयिता श्रद्धेय डॉ. रमाकान्त शुक्ल जी के ७५वें वर्ष की सम्पूर्ति के उपलक्ष्य में उनके जन्मदिन २४ दिसम्बर २०१५ को हीरक जयन्ती शुभाभिनन्दन ग्रंथ **'श्रीहीरकप्राभृतम्'** का प्रकाशन कर आचार्य जी को समर्पित किया जा रहा है।

इस शुभ अवसर पर दिल्ली से प्रकाशित संस्कृत पाक्षिक समाचार पत्र **'संस्कृत-संवाद'** का सारस्वत एवं प्रबन्धन मंडल अपनी शुभकामनाएँ प्रेषित करता है तथा परम पिता परमेश्वर से प्रार्थना करता है कि आचार्य शुक्ल जी दीर्घायु हों, जिससे उनकी कीर्ति पताका अपने ज्ञान प्रकाश से संस्कृत जगत् को सूर्य की भाँति आलोकित करती रहे। आचार्य रमाकान्त शुक्ल अपनी अनेकों कालजयी रचनाओं/ ग्रंथों के साथ अपनी विद्वत्ता के लिये सुविख्यात हैं, परन्तु उनकी सहजता एवं सरलता का गुण उनको व्यक्तित्व विशेष की अनन्यतम श्रेणी में स्थापित करता है। वे सच्चे ज्ञान के साधक हैं, जो अग्रजों के प्रति आदर और अनुजों के प्रति अनुराग का भाव रखते हैं। ज्ञान-धारा के सतत प्रवाह के लिए ये दोनों शर्तें आवश्यक हैं। डॉ. शुक्ल इसका पूर्णतः निर्वहण करते हैं।

डॉ. शुक्ल के साथ मेरा प्रथम साक्षात्कार अविस्मरणीय है। मैं **'संस्कृत-संवाद'** के प्रकाशन के प्रारंभ होने से पूर्व परामर्श सहायता का याचक बनकर उनकी शरण में गया था। संस्कृत भाषा के प्रति मेरा अल्पज्ञान जानकर भी कदाचित् संस्कृत के प्रति मेरे अनुराग का अनुभव कर उन्होंने सहर्ष प्रकाशन की अनुमति दे परामर्शक की भूमिका निर्वहण करने का आश्वासन दिया। दैवयोग से, माँ सरस्वती की कृपा से और आचार्य जी के आशीर्वाद से **'संस्कृत-संवाद'** का प्रकाशन निरंतर आगे बढ़ता गया। प्रकाशन की इस यात्रा में और आचार्य जी की छत्रछाया में अनेकों संस्कृत विद्वानों का आशीर्वाद, मार्गदर्शन एवं अनेकों युवा संस्कृत छात्रों/ शोधछात्रों के सहयोग ने यह कठिन कार्य सुगम बना दिया। आज **'संस्कृत-संवाद'** के निरंतर प्रकाशन के साढ़े चार वर्ष व १०८ अंक प्रकाशित हो चुके हैं। देश भर में इसके पाठकों की संख्या हजारों में है। आचार्य शुक्ल जी का मार्गदर्शन एवं परामर्श इसकी प्राण शक्ति के रूप में विद्यमान है।

**'संस्कृत-संवाद'** के माध्यम से आचार्य शुक्ल का जो सानिध्य एवं स्नेह हमें प्राप्त हुआ वह कदाचित् हमारे प्रारब्ध का प्रतिफल है। हम आचार्य शुक्ल जी के सदैव ऋणी रहेंगे। 'हीरक जयंती' के इस शुभ अवसर पर पुनः आचार्य डॉ. शुक्ल जी को **'संस्कृत-संवाद'** की प्रकाशिका/संपादिका मंजू शर्मा, प्रबन्ध संपादक वेद प्रकाश शर्मा व अन्य अपने सहयोगियों द्वारा हार्दिक बधाई।

शुभेच्छुः

(वेद प्रकाश शर्मा)
प्रबन्ध संपादक

Dear Ramakanthji,

I am enclosing herewith, as attachment, my humble wishes for your birthday(Diamond Jubilee) in verse in Sanskrit.

My husband joins me in conveying the very best wishes for the coming occasion from the bottom of our hearts.

## पद्मश्री-रमाकान्तशुक्लमहोदयाय
## जन्मदिनाशंसां श्लोकमयीं
## स्नेहादरपुरस्सरं
## समर्पयामि

पद्मश्रीवरवर्णरत्नखचिते
गीर्वाणसिंहासने
सर्गश्रीयुतचक्रवर्त्तिसदृशः
प्रौढोज्ज्वलो राजसे।

धन्येऽस्मिन् शिवपुण्यजन्मदिवसे
संप्रार्थये सादरं
सर्वैश्वर्यमतुल्यसौख्यमखिलं
लक्ष्मीसमेतप्रभो!

**Dr.Premalatha V.V.**
Sarojam, Kavuvila, Pothencode, Trivandrum,
Kerala, PIN: 695584.

●

**(२) प्र. भवतां मातुः कीदृशी छविः स्मृतिश्च मनसि भवतां वरीवर्ति, अपि नाम मातरम् आश्रित्य किमपि काव्यं संस्कृते विरचितम्?**

उ. मम माता अत्यन्तं कर्मठा स्वाभिमानिनी तेजस्विनी चासीत्। सा एकादशानामपत्यानां जन्मदात्री आसीत्, येषु द्वे पुत्र्यौ पञ्च पुत्राश्च चिरञ्जीविनः सन्ति। प्रातः ब्राह्ममुहूर्ते उत्थाय सा पेषणीं चालयति स्म यस्या ध्वनिमाकर्णयन्तो वयं सुखनिद्रामनुभवामः स्म। समुदिते सूर्ये सा स्नानमाचर्य 'शिवमहिम्नः स्तोत्रं' 'वेदसारशिवस्तोत्रं' 'हे चन्द्रचूड! मदनान्तक! शूलपाणे!' इत्यादीनि स्तोत्राणि श्रीमद्भागवतं च पठति स्म। अनन्तरं चुल्लिं प्रज्वाल्य भोजनं पचति स्म। पादोननववादनवेलायां पितृपादा विद्यालयं (श्रीराधाकृष्णसंस्कृत-महाविद्यालयं) गच्छन्ति स्म। ततः पूर्वमेव सा भोजनं सिद्धं करोति स्म। चुल्ल्यग्नौ पञ्चकवलान् स्वाहाकारेण साकं 'अग्नये स्वाहा, प्रजापतये स्वाहा. .... कश्यपाय स्वाहे'त्यादिरूपेण समर्पयति स्म। सोपानमधो लघुमहानसमासीत्। वर्षाकाले चुल्ल्या रक्षणार्थं सोपानमवलम्ब्य एका 'टिन'च्छदिः स्थाप्यते स्म। पितृपादाः भोजनकाले ऊर्ध्ववस्त्राणि न धारयन्ति स्म। भोजनात्पूर्वं पुरुषसूक्तस्य 'नाभ्या आसीदन्तरिक्ष'मित्यादिमन्त्रानुच्चारयन्ति स्म। तेषु कृतभोजनेषु वयमपि भोजनं कृत्वा पाठशालां गच्छामः स्म। अपराह्ले गृहमागत्य मात्रा पूर्वाह्ले एव निष्पादितं भोजनं कुर्मः स्म।

अस्माकं माता सर्वेषामपि अपत्यानां कृते वस्त्राणि स्वहस्ताभ्यामेव सीव्यति स्म। ऊर्णवस्त्राण्यपि सर्वेषां कृते निष्पादयति स्म। सा अस्मान् लालयति स्म, किञ्च सत्यामावश्यकतायां ताडयति स्म। ताडनोपकरणेषु हस्तौ, मार्जनी, आरकूटनिर्मितं 'लोटा' संज्ञकं पात्रं काष्ठदण्डो वा मुख्यान्यासन्। अस्माकं पितृपादानां वेतनं विंशतिरूप्यकात्मकमासीत्। तेनैव सा सर्वमपि गृहप्रबन्धं करोति स्म। रात्रौ पादप्रक्षालनानन्तरमेवास्मान् शायितुमनुमनुते स्म। तस्या नाम 'प्रियंवदा' इत्यासीत्। अस्माकं मातुलस्तां 'प्रेम' इत्येवाकारयति स्म। अस्माकं पितृचरणास्तां 'लाली की माँ'- इत्थं सम्बोधयन्ति स्म। 'लाली'ति अस्मज्ज्येष्ठभगिन्याः सावित्र्या लालनाख्या। १९३५ तः १९७० तमं वर्षं यावत्सा अस्मन्माता खुर्जानगरेऽतिष्ठत्। पितृपादेषु दिवंगतेषु तेषां वार्षिकश्राद्धानन्तरं सास्मज्ज्येष्ठभ्रातृपादैः श्रीउमाकान्तशुक्लैस्सह मुज़फ़्फ़रनगरे निवासार्थं गता। १९.९.२००९ तमे वर्षे दिनाङ्के सा अनायासेन दिवं प्रयाता।

तस्याः जीवनम् अदैन्येन पूर्णमासीत्।

२८.११.२००९ तमे दिनाङ्के राष्ट्रियसंस्कृतसंस्थानजयपुरपरिसरस्य नवसंख्याके कक्षे संस्थानस्य तदानीन्तनकुलपतिभिराचार्यश्रीराधावल्लभत्रिपाठिभिः (भवद्भिः) छात्राणां कृते 'मम जननी'ति समस्या पूरणार्थं प्रदत्ता। अहञ्च निर्णायकेष्वन्यतमत्वेन स्थापितः। इयं समस्यापूर्तिस्पर्धा संस्थानस्य युवसम्मेलनस्याङ्गत्वेनायोजितासीत्। मयापि एकस्मिन् पत्रे एकादश पद्यानि 'मम जननी'ति शीर्षकेण तत्रैव विरचितानि। तानि चात्रोद्धरामि-

**मां धृत्वा गर्भे नवमासान्**
**गृहकर्मपरा नित्यं हृष्टा।**
**भगवन्तं ध्यायन्ती कुशलं**
**मे काङ्क्षन्त्यासीन्मम जननी॥१॥**

**मामजीजनद् वात्सल्यमयी**
**सोढ्वा प्रसवस्य परां पीडाम्।**
**मामपाययत् स्वीयं स्तन्यं**
**मम पुष्ट्यै तुष्ट्यै मम जननी॥२॥**

**वर्षाशीतोष्णोत्थं कष्टम्**
**शैशवेऽथ पौगण्डे वा या।**
**आसीद् दूरीकर्तुं नित्यं**
**यतमाना वन्द्या मम जननी॥३॥**

**मां पालयितुं मां लालयितुं**
**मां ताडयितुं मां सान्त्वयितुम्।**
**अगणितयत्नस्था प्रभुरासीद्**
**वन्दनीयचरणा मम जननी॥४॥**

कैशोरे विद्यालयं यदा
गच्छामि स्माहं मित्रैः सह।
पाथेयं मह्यं नित्यमदात्
सा धन्या वन्द्या मम जननी॥५॥

यौवने दिदृक्षुः पुत्रवधूं
सुन्दरीं सुशीलां कर्मण्याम्।
वस्त्राभरणं तत्कृतेऽनुरूपं
चिन्वानासीन्मम जननी॥६॥

दुहिता भगिनी जाया याता
सा पितृष्वसा सा पितामही।
अथ भूत्वा मातामही कुटुम्बं
सेवित्वाऽयान्मम जननी॥७॥

पौत्रान् दृष्ट्वा सेवित्वा गां
सम्भाष्य सन्ततीः स्वस्थेव।
दत्वाशीर्वादान् सर्वेभ्यः
स्वर्गता शतायुर्मम जननी॥८॥

या त्यागमयी वात्सल्यमयी
श्रमपरा तथेशध्यानपरा।
अस्मासु च करुणामयी सदा
सा जयति वदान्या मम जननी॥९॥

तस्यां जीवन्त्यामहमासम्
बालोऽपराधकर्माधिकृतः।
पुरुषं विधाय मां गम्भीरं
स्वर्याता वन्द्या मम जननी॥१०॥

सा प्रियंवदा प्रियकर्मपरा
सा क्षमामयी सा दयामयी।
छत्रं परिवारशिरस्यासीत्
सुखदा शुभदा सा मम जननी॥११॥

**(३) प्र. भवतां पितृचरणानां कीदृशी छविः स्मृतिश्च मनसि भवतां वरीवर्ति?**

उ. मम पितृचरणा अत्यन्तं सुरूपाः स्वस्था उदाराः प्रसन्नवदनाश्चासन्। मया १९४४ तमे खैष्टाब्दे तेषामाकर्षकं व्यक्तित्वं यथावलोकितं तत्स्मृत्वा आनन्दानुभूतिर्जायते। तेषां वेषभूषासीत्-

गान्धि-शिरस्त्राणं, जवाहरकटेत्याख्यं वस्त्रं, श्वेतकञ्चुकम्, स्वच्छं धौतवस्त्रं, हस्ते वेत्रदण्डश्चेति। प्रातरुत्थाय ते श्लोकान् सस्वरं पठन्ति स्म। वयं च तान् शयाना एव शृणुमः स्म। वयमपि तान् श्लोकान् आम्रेडयामः स्म। ते व्यायाममपि कुर्वन्ति स्म। मुद्गरं भ्रामयन्ति स्म। वयमपि सर्वे भ्रातरोऽभ्यङ्गं कृत्वा व्यायामं कुर्मः स्म।

पितृपादाः प्रातरुत्थाय नित्यकर्माणि सम्पाद्य स्नान-सन्ध्या-तर्पणादिकं कृत्वा पादोननववादनवेलायां विद्यालयाय प्रस्थानं कुर्वन्ति स्म। पादोननववादने एकं विमानमाकाशे आयाति स्म सूर्यातपश्च भित्तौ विशेषस्थानं स्पृशति स्म। तदैव ते गृहात् प्रतिष्ठन्ते स्म। अवकाशानन्तरमपि ते विद्यालये विद्यार्थिनः पाठयन्ति स्म। यद्यपि प्रसन्नानना एव ते प्रायोऽवलोक्यन्ते स्म तथापि अस्माकमपराधातिशये ज्ञाते सति तेषां क्रोधोऽपि विजृम्भितो भवति स्म। तदा तेऽस्मान् सर्वानमपि भ्रातॄन् ताडयन्ति स्म। ताडनानन्तरं हरिद्रया सह दुग्धं पाययितुं मातरं निर्दिशन्ति स्म।

श्रीराधाकृष्णसंस्कृतमहाविद्यालये समायोजितेषु गीताजयन्ती-वसन्तपञ्चम्याद्युत्सवेषु ते अस्मान् सस्वरं श्लोकान् श्रावयितुं मञ्चमारोहयन्ति स्म। स्वयं च 'हारमोनियम्'वाद्येन संगतिं कुर्वन्ति स्म। तैः सर्वेऽपि पुत्राः संस्कृतं पाठिताः। वयं चत्वारो भ्रातरोऽस्मत्पितृचरणानां शिष्याः स्मः। तेऽस्माकं साहित्यगुरवः आसन्।

ते वाग्मिन आसन्। सरस्वती तेषां जिह्वायां वसति स्म। प्रसादगुणोपेतां संस्कृतवाचं यदा ते ब्रुवते स्म तदा सर्वेऽपि सभासदस्तन्मयीभावं भजन्ते स्म। ते कुतुकादेव श्लोकान् रचयन्ति स्म। तैः प्रणीतैरेव पद्यैर्विद्यालये प्रार्थना भवति स्म। यथा-

**विश्वानि देव सवितर्दुरितानि यानि**
**तानि प्रभो! सपदि दूरतया जहीहि।**
**पापापचारपरिपूरितमानसानां**
**त्वं नः पिता कुरु दयामयि दीनबन्धो॥**
**दग्धोदरस्य हतकस्य सुपूरणाय**
**किं किं न वा कृतमहो नटकृत्यमत्र।**
**विस्मृत्य भूतिनिकरं करुणाकरं त्वाम्**
**एतर्हि मुञ्च करुणां मयि दीनबन्धो॥**
**योपासिता मुनिभिरस्तसमस्तपापै-**
**रज्ञाननाशनिपुणा निपुणैस्तदैव।**
**या प्रार्थिता सततमत्र पुराणपुम्भि-**
**र्मेधाविनं कुरु तयैव सुमेधया माम्॥ इति॥**

अस्माकं गृहेऽपि विद्यार्थिन आयान्ति स्म। वाराणस्या अपि विद्यार्थिनस्तेषां सकाशे ग्रन्थग्रन्थीनुद्घाटयितुमागच्छन्ति स्म।

वयं शैशवे कैशोर्ये च तेषामध्यापनकालीनानि वाक्यानि पद्यानि च अनायासेनैव स्मृतिगतानि कण्ठस्थानि च कुर्मः स्म। अस्माकं माता अन्नपूर्णेव तेभ्यो नवनवानि स्वादूनि व्यञ्जनानि भोजनार्थं प्रयच्छति स्म। ते गृह एव स्वरुच्यनुसारं भोजनं साधयितुं तां भणन्ति स्म। तेऽस्मानध्ययनायापि प्रेरयन्ति स्म।

**(४) प्र. अपि नाम तेषां प्रभावः भवतां लेखने विचारेषु वा परापतितः?**

उ. अस्माकं पितृपादैर्बहूनि मुक्तकानि पद्यानि प्रणीतानि। तेषां च लेखनमेकस्यां पञ्जिकायां कृतम्। तां पञ्जिकां तेषामेकश्छात्रो गृहीत्वा पलायितः। तेषां रचनाः 'सुप्रभातम्' इत्येतन्नाम्नि पत्रे, 'विश्वसंस्कृते' अन्येषु सावधिकेषु पत्रेषु प्रकाशिता अभूवन्। तैः १९४८ तमे खैष्टेऽब्दे वाराणस्यां राजकीयसंस्कृतकॉलेजे समायोजिते संस्कृतकविसम्मेलने 'भारतसुषमा' नाम्नी दीर्घा कविता पठिता यस्या आद्यं पद्यमिदमस्ति-

**सुधोपमैर्दिव्यजलैः सदैव**
**गङ्गादयो यं परिपावयन्ति।**
**वेदप्रभाभासुरभूसुरालि-**
**देशः स नो मङ्गलमातनोतु।**

तैः 'गान्धिचरित' खण्डकाव्यस्य 'श्रीनेहरूचरित'महाकाव्यस्य च रचना कृता। तेषां देशभक्तिभावस्य प्रासादिकतायाश्च प्रभावो मम रचनासु स्वाभाविक एव।

**(५) प्र. अपि भवद्भिः तान् आश्रित्य किमपि काव्यं संस्कृते विरचितम्?**

उ. मया तेषां विषये कानिचित् ग्रन्थसमर्पणरूपाणि पद्यानि प्रणीतानि, येषु तेषां व्यक्तित्वं मनाक् प्रकाशितं भवति। तद्यथा-

**प्रालेयाचलतुल्यं कायं रत्नाकरोपमं चित्तम्।**
**कविप्रतिभामिव वाणीं यो बिभ्रत् सज्जनाशंसी।।**
**यं दृष्ट्वा ब्रह्माणं वाग्देवी तरलहृदयाभूत्।**
**आनन्दाम्बुधिभूतं विद्यानद्यो यमधिजग्मुः।।**
**आत्मजपञ्चकधारी पञ्चाननतां च यो यातः।**
**गौर्या समर्च्यमाणो नित्यं मुमुदे प्रियंवदया।।**
**वदनं प्रसादसदनं हृदयं सदयं सुधामुचो वाचः।**
**करणं परोपकरणं यस्य सदैवाभवंल्लोके।।**
**वाग्देवतावतारो वाग्देवीमर्चयन्नित्यम्।**
**वाग्देवीपञ्चम्यां वाग्लीनो योऽभवज्जनकः।।**

**कीर्तिमयं यं स्मृत्वा सरस्वती सर्वशुक्लास्ते।**
**जाड्यं हरति च यो मे श्रीब्रह्मानन्दशुक्लाख्यः॥**
**तस्य स्मृतिस्वरूपा विज्ञमनःपश्यतोहर्त्री।**
**तस्य कृपेवोदारा विलसतु लोके कृतिः सेयम्॥**

('जैनाचार्यरविषेणकृत पद्मपुराण और तुलसीकृत रामचरितमानस' इति ग्रन्थस्य समर्पणपद्यानि, १९७४ ई.)

**बाल्ये येनाध्यापित आसं साम्नाथ दण्डेन।**
**शुक्लं ब्रह्मानन्दं तं जनकमथो गुरुं वन्दे।**
**यः शिष्यकल्पवृक्षः साहित्याम्भोधिमन्थगिरिः।**
**मयार्प्यते कृतिरेषा तस्मै ब्रह्मणि निलीनाय॥**

(सर्वशुक्लोत्तरायां समर्पणपद्ये)

एतदतिरिच्यापि कानिचित् पद्यानि रचितानि, यथा-

**साहित्याम्भोधिमन्थाचलमतिसदयं छात्रदात्यूहमेघं**
**शिष्येहाकल्पवृक्षं बुधकमलविकासाय सूर्यं तपन्तम्।**
**श्रीमन्माईदयालोः सुतमथ 'तुलसा'गर्भसम्भूतमीड्यं**
**श्रीब्रह्मानन्दशुक्लं जनकमथ गुरुं श्रद्धयाहं स्मरामि॥**
**जातश्चर्थावलाख्ये प्रथितपुरवरे चन्द्रशून्यग्रहेन्दु-**
**प्रख्ये (१९०१) वर्षे ततोऽगान्निजजननिसहोदर्यगेहं निवस्तुम्।**
**'बेढ़ा आसे'तिरम्ये कृषिपशुलसिते ग्रामके स्नेहपूर्णे**
**श्रीब्रह्मानन्दशुक्लं मम जनकगुरुं श्रद्धया तं स्मरामि॥**
**ग्रामान्निर्गत्य योऽगात् कनखलनगरं संस्कृतज्ञानहेतो-**
**र्भागीरथ्याख्यविद्यालयमधिवसता येन विद्या गृहीता।**
**तत्रागाच्छिष्यतां श्रीगुरुवरपरमानन्दशास्त्रिप्रधेर्यः**
**श्रीब्रह्मानन्दशुक्लं जनकमथ गुरुं श्रद्धयाहं स्मरामि॥**
**पश्चाद्यातः प्रसिद्धाममृतसर इति प्रोज्ज्वलां सत्पुरीं योऽ**
**ध्येतुं साहित्यविद्यां प्रथितगुरुवरात् श्रीमणेश्चन्द्रपूर्वात्।**
**लाहौरप्राच्यविद्यागृहमपि विदुषां प्रार्थितं यः सिषेवे**
**श्रीब्रह्मानन्दशुक्लं जनकमथ गुरुं श्रद्धयाहं स्मरामि॥**

**उत्तीर्याथो परीक्षां बुधगणमहितां यश्च पंजाबशास्त्री-**
**त्याख्यां डेराबसीतिप्रथितपुरवरेऽध्यापकोऽभून्मनस्वी।**
**तत्पश्चात् पाठयन् यः प्रथितमु.नगरे छात्रवृन्दं बभासे**
**(मु. नगरे=मुजफ्फरनगरे)**
**श्रीब्रह्मानन्दशुक्लं जनकमथ गुरुं श्रद्धया तं स्मरामि॥**

**(६) प्र. भवतां भ्रातरः सर्वे संस्कृतविद्वांसः कवयश्च सन्ति, तेषां सान्निध्यस्य कीदृशः प्रभावो मनसि भवतां वरीवर्ति?**

उ. मम सर्वेऽपि भ्रातरोऽध्ययनशीलाः प्रौढा विद्वांसः कवयश्च सन्ति। वरिष्ठो ज्येष्ठभ्राता (स्व.) डॉ. कृष्णकान्तशुक्लः उत्तरप्रदेशे बरेलीकॉलेजे संस्कृतविभागाध्यक्ष आसीत्। तेन संस्कृतमाध्यमेन 'महाकवी रत्नाकरस्तदीयं हरविजयञ्चे'तिशीर्षकं शोधकार्यं कृतम्। तद्रचिता 'कामयेऽयं' 'ते के न जानीमहे'त्याद्या अनेकाः कविताः 'अर्वाचीनसंस्कृते' प्रकाशिताः। कनिष्ठो ज्येष्ठभ्राता डॉ. उमाकान्त शुक्लः 'परीष्टिदर्शनम्', 'चाङ्गेरिका', 'मङ्गल्या' इत्येतेषां काव्यानाम् अथ चानेकेषां दीपावली- मुक्तकानां कर्तास्ते। ममानुजेन डॉ. विष्णुकान्तशुक्लेन 'स्फाटिकी माला' शीर्षकं नारीमाहात्म्योद्घोषकं मुक्तककाव्यसंकलनं प्रणीतम्। सर्वेषामपि भ्रातॄणां सङ्गस्य कश्चित्प्रभावस्तु स्यादेव। तस्य समुन्मीलनं शोधकर्तारो विधातुमर्हन्ति।

**(७) प्र. आकाशवाण्या भवतां सम्पर्कः कदा जातः?**

उ. आकाशवाण्या दिल्लीकेन्द्रेण सह मम सम्पर्कः १९६३ तमे खैष्टेऽब्दे जातः। तदा मया 'ब्रजकाव्य में वसन्त वर्णन' इत्येतच्छीर्षकेण हिन्दी-वार्ता प्रस्तुता। अष्टमसंख्ये ध्वन्यङ्कनकोष्ठे वार्ताया ध्वन्यङ्कनमभूत्। तत आरभ्य २०१३ तमं वर्षं यावत् आकाशवाण्या दिल्लीकेन्द्रात् मम दशाधिकानां ध्वनिनाटकानां, हिन्दी-संस्कृत-सोदाहरणवार्तानां, संस्कृत-कवितानां, काव्यानुवादानां परिचर्याणां नाट्याभिनयानां च प्रसारणमभूत्। गतेषु पञ्चाशद्वर्षेषु आकाशवाण्या दिल्लीकेन्द्रात् लखनऊकेन्द्राच्चानेका रचनाः प्रसारिताः। १९८३ तमे वर्षे सर्वभाषाकविसम्मेलने मम कविताया 'अहं स्वतन्त्रता भणामी'ति शीर्षकायाः प्रसारणं सर्वेभ्योऽप्याकाशवाणीकेन्द्रेभ्योऽभूत्। २०१३ तमे वर्षे

'एफ.एम.' चैनलात् अथ च 'रेनबो एफ. एम.' चैनलादपि मम साक्षात्काराः प्रासार्यन्त।

**(८). प्र. तद्विषये केचन रोचकाः अनुभवाः स्मृतयः वा?**

उ. आकाशवाण्या गणतन्त्रदिवसमालक्ष्य २३.०१.१९८३ तमेऽब्दे भोपालनगरे 'रवीन्द्रालये' सर्वभाषाकविसम्मेलनमायोजितम्। मम कविताया अनुवादो होश्यारपुरनिवासिना डॉ. कृष्णमुरारिशर्मणा कृतः। कविसम्मेलनात् पूर्वं भोजनस्य व्यवस्थासीत्। आवाभ्यां कविसम्मेलनादनन्तरं भोजनं स्वीकर्तुं संकल्पितम्। आवामुभावपि रचनां सस्वरं पठितुमिच्छावः स्म। घृतसिद्धपक्वान्नेन कण्ठस्वरभ्रंशो मा भूदिति चिन्तयद्भ्यामावाभ्यां कविसम्मेलनात्पूर्वं भोजनं न कृतम्। कविसम्मेलनं रात्रौ सार्धदशवादनवेलायां समाप्तम्। तदनु अर्धघण्टावधौ सर्वेभ्योऽपि कविभ्यो धनपत्राण्यदीयन्त। तदनु आवां स्वावासं प्राप्तौ। तत्रातिथिभवने किमपि भोक्तुं न लब्धम्। बुभुक्षा बाधते स्म। टी.टी. नगरपण्यवीथिकायां गतौ। तत्रैको 'मूंगफली' विक्रेता स्वशकटिकया साकमागच्छति स्म। आवां तत्सकाशं गतौ, किन्तु तस्य पण्यं पूर्वमेव विक्रीतमासीत्। बुभुक्षाबाधितावावाम् एकमापणमुद्घाटितं वीक्ष्य तत्र गतौ। तत्र केवलम् 'हिमिकेष्टिका' (आइसक्रीमब्रिक) एव सुलभासीत्। सा क्रीता। अर्धा भुक्ता सा पूर्वं मधुरा प्रतीता अनन्तरं सा कट्वी प्रतीयते स्म। अर्धा त्यक्ता। इत्थं सा रात्रिः सकष्टं यापिता। एष रोचकः प्रसङ्गः।

**(९). प्र. तत्रत्यानां केषाञ्चन विशिष्टानाम् अधिकारिणां स्मृतयः, तैः साकं कार्यकरणस्य अनुभवाः?**

उ. आकाशवाण्या अनेकेऽधिकारिणो मम सम्पर्के आगताः। तेषु श्रीफकीरचन्द्रमाथुरो नाट्यप्रस्तोतासीत्। 'पण्डितराजीयम्' 'अभिशापम्' 'चक्रानुसरणम्' इत्येतानि ध्वनिनाटकानि तस्यैव प्रस्तोतृत्वे प्रासार्यन्त। श्रीगोपालसक्सेना प्रस्तुतिसहायको भवति स्म। स सर्वानपि अभिलषितान् ध्वनिप्रभावान् सङ्कलयति स्म, यथास्थानं च संयोजयति स्म। श्रीराजमणि रायः, श्रीसुदीपबनर्जी, श्रीकमलदत्तः, श्रीउपेन्द्ररैना इत्यादिभिः मम नाटकानां प्रस्तुतिः कृता। डॉ. राजेन्द्र कुमार माहेश्वरी, श्री वसन्त यामदग्निः अन्ये च

अनेके अधिकारिणो मम वार्ताः प्रसारयन्ति स्म। काश्चन नाट्यप्रस्तुतयो मयापि निर्दिष्टाः। एकवारं 'विक्रमोर्वशीयम्' इति ध्वनिनाट्यरूपान्तरस्य कृते एकघण्टात्मकः समयो निर्धारित आसीत्। सहसा ज्ञातं यदधुना अर्धघण्टात्मक एव समयस्तत्कृते निश्चीयते। ध्वन्यङ्कनमेकघण्टात्मक-समयानुसारं कृतमासीत्। श्रीगोपालसक्सेना प्रस्तुतिसहायक आसीत्। अहं च निर्देष्टा। समयानुरोधं रक्षयद्भिरस्माभिश्चतुर्थाङ्कस्य मिनटत्रयेणैव कोकिल-गज-घन-हंसादीनां ध्वनिप्रभावसंयोजनेन प्रस्तुतिः कृता। गोपालसक्सेना प्रथममुद्विग्नो जातः परमनन्तरं ताम्बूलभक्षणं कृत्वा सर्वमपि सुसिद्धमकरोत्। सर्वेषामेव सहयोगो मत्कृते सुलभ एवासीत्। संस्कृतं प्रति सर्वेषामादरभाव आसीत्।

### (१०) प्र. दूरदर्शने भवतां सम्पर्क कदा जातः?

**उ.** दूरदर्शने मम प्रथमा प्रविष्टिः १९७० तमेऽब्दे जाता। सई परांजपे तस्य कार्यक्रमस्य प्रस्तोत्री आसीत्। 'ह्वाट हज़ रांग विद द वीमन' इत्यस्मिन् विषये एका परिचर्चासीत्। श्रीहबीब तनवीरः, काचिदेका महिला अहं चास्यां प्रतिभागिन आस्म। तदानीमेकमेव चैनलमासीत्। सर्वस्मिन्नपि देशे तस्य दर्शनं भवति स्म। तत आरभ्य अनेके कार्यक्रमाः २०१३ तमं वर्षं यावत् प्रासार्यन्त यत्र मया सहभागिता कृता। कवितापाठः, सांस्कृतिकी, परिचर्चा, साक्षात्कारदानम्, साक्षात्कारग्रहणं, 'भाति मे भारतम्' इत्यादयः कार्यक्रमाः प्रासार्यन्त।

### (११) प्र. तद्विषये केचन रोचकाः अनुभवाः स्मृतयः वा?

**उ.** दूरदर्शनात् देववाणी-परिषदा समायोजितानाम् अखिलभारतीय-संस्कृत-कविसम्मेलनानामंशा अनेकधा प्रासार्यन्त। प्रथमवारं दिल्लीदूरदर्शनकेन्द्रनिदेशकाः श्रीराजमणिरायमहाभागाः मया दृश्य-श्रव्याङ्कनार्थं दलं प्रेषयितुं प्रार्थिताः। तैर्ममानुरोधः स्वीकृतः दलं च दिल्लीविश्वविद्यालयस्य टैगोरहालेति सभाभवने प्रेषितम्। दलस्य सदस्याः संस्कृतेन प्रायोऽपरिचिता आसन्। ते निर्दिष्टा आसन् यत्सार्धमिनटं यावत् एकैकस्य कवेर्ध्वन्यङ्कनं कुर्वन्तु। अङ्कनकर्त्रा समयस्तु पालितः किन्तु श्लोकपादानाम् आदिरन्तश्च त्यक्तौ। एतेन सम्पादनकाले महती बाधा आपतिता। द्वितीयवारं यदा मया

अङ्कनार्थं दलमाकाङ्क्षितम् तदा संस्कृतज्ञा शशिबाला तैः प्रेषिता। अङ्कन-प्रसारणं च रुचिकरमभूत्।

**(१२) प्र. तत्रत्यानां केचन विशिष्टानाम् अधिकारिणां स्मृतयः, तैः साकं कार्यकरणस्य अनुभवाः?**

उ. दूरदर्शने 'भाति मे भारतम्' इत्यस्य धारावाहिकस्य कार्यक्रमस्य प्रसारणानन्तरं यः कोऽपि परामर्शो दूरदर्शनाय अदीयत प्रायस्तस्य कार्यान्वयनं तत्पक्षतः क्रियते स्म। तत्र श्रीशरददत्त एकः प्रस्तुतिकर्ता आसीत् यो नववर्षस्य पूर्वसन्ध्यायां मनोरञ्जकं कार्यक्रमं प्रस्तौति स्म। अनन्तरं स दिल्लीकेन्द्रस्य निदेशकोऽपि संजातः। १९९५ तमे वर्षे मया तत्समक्षं प्रस्तावः कृतो यत् संस्कृतमाध्यमेनापि सम्पूर्णवर्षस्य प्रमुखानां घटनानां सिंहावलोकनं दूरदर्शनतः प्रसारणीयम्। तेन उच्चाधिकारिभिः सह वार्ता कृता। प्रस्तावः स्वीकृतोऽभूत् किन्तु कार्यक्रमस्य निष्पादनायाहमेव नियुक्तोऽभूवम्। दूरदर्शनेन मह्यं दृश्यानि सुलभीकृतानि। मया लेखः सज्जीकृतः। प्रस्तोतृत्वेन दृश्य-श्रव्याङ्कनं ममाभूत्। सम्पादकेन सह निजी-स्टूडियो-मध्ये नक्तंदिवं स्थित्वा दिसम्बरस्य २९-३० दिनाङ्कयोः कार्यक्रमस्य निर्माणं कृतम्। दूरदर्शने दृश्य-श्रव्य-पट्टिका च प्रसारणार्थं प्रदत्ता। 'पञ्चनवतीयम्' इत्यस्य कार्यक्रमस्य प्रसारणं १.१.१९९६ तमे दिनाङ्के प्रातः ७.१५ वादनेऽभूत्। एतदर्थं २००००/- रूप्यकाणि लब्धानि यानि प्रायः स्टूडियो-प्रयोगार्थमेव व्ययीभूतानि। किन्तु ऐदम्प्राथम्येन संस्कृतमाध्यमेन सिंहावलोकनं (राउण्ड अप) प्रसारितमभूदिति मनस्तोषोऽजायत।

**(१३) प्र. भवतां संस्कृतकाव्ययात्रा कथम् आरब्धा, प्रथमा रचना कदा व्यरचि, कुत्र प्रकाशिता?**

उ. यथाहं स्मरामि, मम प्रथमा संस्कृतपद्यरचना १९५६ तमे खैष्टेऽब्दे खुर्जास्थश्रीराधाकृष्णसंस्कृतमहाविद्यालयस्य मन्दाकिनीति हस्तलिखितपत्रिकायां 'कालिदासपुराणम्' इत्येतच्छीर्षकेण प्रकाशिता जाता। तत्र पञ्चविंशतिसंख्याका अनुष्टुप आसन्। एकमुदाहरणं स्मर्यते-

**'अतः परीक्ष्य कर्तव्यं विशेषात् सङ्गतं रहः।**
**शकुन्तलायाः सन्देश इत्येव परमोज्ज्वलः॥'**

**(१४) प्र. संस्कृतस्य के कवयो भवद्भ्यो रोचन्ते?**

उ. संस्कृतस्य अनेके कवयो मया दृष्टाः श्रुताश्च। तेषु ये सस्वरं रचनाः प्रस्तूय श्रोतॄन् रससागरे निमज्जयन्ति ते सर्वेऽपि मह्यं रोचन्ते। तेषु मम पितृपादाः (श्रीब्रह्मानन्दशुक्लाः), आचार्याः श्रीनिवासरथाः, 'अभिराज'राजेन्द्रमिश्राः, आचार्यराधावल्लभत्रिपाठिनः 'मणि'-'प्रणवौ' च मुख्याः।

**(१५) प्र. केषां प्रभावो भवतां रचनासु प्रत्यफलत्?**

उ. अस्मिन् विषये शोधकर्तारः प्रमाणं स्युः।

**(१६) प्र. संस्कृतकविसम्मेलनानां विद्वत्सम्मेलनानां च कीदृशा भवतामनुभवाः,.......... तेषु केषाञ्चन मधुरास्तिक्ता वा स्मृतयः....?**

उ. कालिदास-समारोह-समित्या कालिदास-अकादेम्या, म.प्र. संस्कृत-अकादेम्या, दिल्ली संस्कृत अकादेम्या, देववाणी-परिषदा, उत्तरप्रदेशसंस्कृताकादम्या सागरविश्वविद्यालय-संस्कृत-विभागेन, उदयपुर-पुणे-जगन्नाथ-श्रीलालबहादुरशास्त्रि-तिरुपति-राष्ट्रियसंस्कृत-संस्थानविश्वविद्यालयैरथ च विश्वसंस्कृतसम्मेलनेनायोजितेषु संस्कृतकवि-सम्मेलनेषु मया काव्यपाठः कृतः। अखिलभारतीयप्राच्यविद्या-सम्मेलनेषु कविबन्धूनामनुरोधं पालयितुं मया स्थानस्य समयस्य च व्यवस्था बहुधा कारिता तत्र च कविसम्मेलनानि समायोज्यन्त। फिलाडेल्फियानगरेऽपि संस्कृतकविसम्मेलनार्थं देशकालौ सुरक्षितुं समायोजका अनुनीताः। ततः परं तु 'एडिनबरा' नगरे (भवतः आचार्यराधावल्लभत्रिपाठिनः) संयोजकत्वे विधिवत् कविसम्मेलनमायोज्यत। एतेषु संस्कृतकविसम्मेलनेषु संस्कृतस्य विविधां समृद्धिं वीक्ष्य मनः प्रमोदते।

**(१७) प्र. पुरस्काराणाम् अलङ्करणानां च विषये भवतां कीदृशी अवधारणा, अपि नाम एतैः प्रतिभाया योग्यतायाश्च यथोचितं सम्मानः भवति?**

उ. पुरस्काराणामलङ्काराणां च विषये मयाधिकं न चिन्तितम्। एते प्रायः प्रतिभायाः सम्मानं कर्तुमेव प्रवर्तिताः भवन्ति। कदाचिदेते सत्पात्रेभ्यः समर्प्यन्ते कदाचिच्चैते कैश्चित् स्वलक्ष्यप्राप्तिप्रवीणैः समर्ज्यन्ते। ये पुनः

सरस्वतीसमाराधनतत्परा विद्वांसः कवयो वा भवन्ति ते तु पुरस्कारालङ्करणादिस्पृहा अपि स्वधर्मं निष्कामभावेन पालयन्त्येव। अद्याप्यनेके सज्जनाः पुरस्कृता न जाताः। किमेतेन तेषां प्रतिभा कुण्ठिता भवति? 'भवति योजयितुर्वचनीयता।'

**(१८) प्र. पद्मश्रीप्राप्त्यवसरे कीदृशः अनुभवः भवताम्?**

उ. 'पद्मश्री'सम्मानप्राप्त्यवसरे मयानुभूतं यन्मत्तोऽधिकाः विद्वत्तराः अस्य सम्मानस्य पात्राणि सन्ति। 'पद्मश्री'-सम्मानप्राप्त्यवसरे मया राष्ट्रपति-महोदयाः श्रीप्रणवमुखर्जीमहाभागाः उक्ता आसन्- 'संस्कृताराधनायै सम्मानदानार्थं भवन्तो धन्यवादार्हा' इति अयं सम्मानः समकालीन-संस्कृतसाहित्यसेवायाः कृते मया समोदं स्वीक्रियते।

**(१९) प्र. भवतां पुत्राणां कीदृशं योगदानं तस्यां साहित्यिकयात्रायाम्?**

उ. मम त्रयोऽपि पुत्राः डॉ. चन्द्रमौलिः शुक्लः, श्री आनन्दवर्धनः शुक्लः, डॉ. अभिनवः शुक्लश्च मम साहित्यिकयात्रायां सात्त्विकं योगदानं कुर्वन्ति। आबाल्यादेव देववाणी-परिषदः कार्यकलापानां संयोजने, 'अर्वाचीनसंस्कृत'स्य प्रकाशने, टङ्कणव्यवस्थायां, पत्राचारे च मम साहाय्यं विदधति। एते चिरं जीवन्तु।

**(२०) प्र. भवतां सहधर्मिणीनां का दृष्टिः अवधारणा च भवन्तमधिकृत्य...? प्रत्येकं महापुरुषस्य सफलतायां हेतुभूता काचन स्त्री भवतीति भवन्त एनं सत्यं मन्यन्ते?**

उ. कस्यापि जनस्य सहधर्मिणी तस्य कुटुम्बस्य पालयित्री व्यवस्थापिका च भवति। मम सहधर्मिणी श्रीमती रमा शुक्ला मयि सविशेषं सानुक्रोशास्ति। विगतेभ्यः ४८ वर्षेभ्यः सा कुटुम्बस्य भर्त्री त्वस्त्येव, मम साहित्यिककर्मणां प्रोत्साहनकर्त्री अप्यस्ति। पूर्वं तु सा पुस्तकानि कर्गलानि च इतस्ततः सर्वत्र वीक्ष्य उद्विजते स्म किन्तु मम दुरतिक्रमं स्वभावं वीक्ष्य शनैः शनैः सर्वमपि सोढुं स्वं स्वभावमनुनीतवती। तस्या मम विषयेऽवधारणा तादृश्येवास्ति या प्रायः गृहिण्याः स्वपत्युर्विषये भवति। तस्याः सहयोगो यदि मह्यं सुलभो नाभविष्यत्तर्हि नवदिल्ल्याः वाणी-विहारे स्थिते 'रमालये'

सारस्वतानुष्ठानानामायोजनं नाभविष्यत्। अर्वाचीनसंस्कृतस्य प्रेषणकार्येऽपि सा सहयोगं करोति। देववाणी-परिषद उपाध्यक्षा सती आयोजनानि सफलयति। तया मम 'सर्वशुक्लोत्तरायाः' हिन्दी-भाषानुवादोऽपि कृतः। एवं सा वस्तुतः सहधर्मिणी अस्ति। नाहं महापुरुषः किन्तु यदि मम किमपि साफल्यमस्ति नूनं तत्र तस्याः काचन भूमिका अस्त्येव।

**(२१) प्र. पत्नीमधिकृत्य भवद्भिः किमपि काव्यं प्रणीतम्?**

**उ.** पत्नीमधिकृत्य इदानीं यावत्तु किमपि काव्यं न प्रणीतं किन्तु भवतां प्रेरणया मया तामवलम्ब्यावश्यमेव किमपि लेखनीयम् इति मे विचारः।

सद्य एव २०१३ तमे खौष्टेऽब्दे विल्लूर् नडादूर् आशुकविसार्वभौमश्रीनिधिराघवार्यप्रणीतस्य वसुमतीशतकस्य टीका प्रणीता यस्या नाम 'रमा' इत्यस्ति। अस्याः प्रकाशनं चेन्नईतः दिसम्बरे मासे जातम्। अयं मे कार्तज्ञाञ्जलिस्तस्यै। भूयो भूयो धन्यवादः।

**संस्कृतप्रतिभा (संयुक्ताङ्कः जनवरी २०१३- दिसम्बर २०१३, उन्मेषः ४८-४९ इत्यतः साभारम्)**

●

# श्रीशुक्लपञ्चविंशतिका

- डॉ. शिवदत्त शर्मा चतुर्वेदी

प्रचलतुतरां मदीया करस्थिता लेखनी देवी।
कवितापुरुषसपर्याकार्ये पावनविभावना पूर्णा॥१॥
निखिले भूमीवलये मौलिमणिर्भारतो देशः।
तत्र प्रदीप्तिपूर्णा भातितरां देहली नगरी॥२॥
तस्यामथ देहल्यां विख्याता देववाक्परिषद्।
तस्यावदानसुषमासौरभरूपा रमाकान्ताः॥३॥
येषां निखिले विश्वे गतिः समानैव विस्तृता जाता।
येषां कविता निखिलं संसारं संविभासयति॥४॥
तत्रापि काव्यपूजा विहिता तैर्भारतस्य देशस्य।
सहृदयहृदयनिविष्टा भातितरां काव्यमालयेम्॥५॥
देहल्यां किल समये पण्डितराजो जगन्नाथः।
विस्तारितवान् स्वीयं काव्यकलाऽलापमाधुर्यम्॥६॥
अद्यापि तत्र नगरे पुनरावृत्तिर्विलोक्यते सैषा।
अभिनवकवितापुरुषे शुक्ले श्रीमद्रमाकान्ते॥७॥
क्षणशः क्षणशो नित्यं प्रवर्तते देवभाषायाम्।
अभिनवसम्यक्साधनविभावनायां सुसंवलितः॥८॥
संसारे देशानां यो विस्तारः समीकृतोऽनेन।
संस्कृतवाग्विस्तारे तस्यास्तेऽल्पीयसी तुलना॥९॥
एतत्काव्यालापे या निस्तब्धा श्रवणदृश्यमयी।
शोभा दृष्टा काचित् कैः शब्दैर्वर्ण्यतां यायात्॥१०॥
अध्यापनेन सार्धं कविना श्रीशुक्लवर्येण।
शब्दार्थयोर्निकाये सम्परितप्तं तपो घोरम्॥११॥
तेनैव निखिलजनता संसिद्धोऽसौ वशीकारः।
अङ्गुलिगणनीयेषु प्रथमोऽस्ति श्रीरमाकान्तः॥१२॥

परिषदियं सम्प्राप्ता विख्याता देववाणीति।
संस्थानिर्माणानां मालायां मध्यमणिरूपा॥१३॥
एतत्संस्थाद्वारा शतशः सम्यक् प्रकाशनानि जातानि।
काव्यानां नव्यानां शास्त्रीयानां च ग्रन्थानाम्॥१४॥
यैः सहभावे कालः सर्वः कश्चित्सुखावहो जातः।
भाग्यैर्लभ्याः कैश्चन ते श्रीमन्तो रमाकान्ताः॥१५॥
आपादमस्तकं ते शुक्ला वेशेषु देशेषु।
दर्शं दर्शमतृप्ता एव सदा दर्शकाः सर्वे॥१६॥
स्वीये जीवनकाले यानि तु कार्याणि विहितानि।
युगपर्यन्तं तेषां ख्यातिं संसाधयिष्यन्ति॥१७॥
एतादृशधौरेयाः शतशः कार्याणि कुर्वाणाः।
इतिहासानां दीप्तिं स्वीयाचरणेषु धारयन्तितमाम्॥१८॥
संस्कृतस्य साहित्यं पुरातनं चाथ नव्यतरम्।
सृष्टीनां प्रलयोदयगाथानां तत्र संरम्भाः॥१९॥
नैकविधाः संदृष्टाः सुरक्षिता जीवनं चाग्रे।
वर्धिष्णुं विदधाना नित्यनवा एव लोक्यन्ते॥२०॥
दार्शनिकी सन्दृष्टिः परम्परायां समायाता।
संस्कृतसेवानिरतानामेषा भूयसी सम्पत्॥२१॥
एतद्विश्वगुरुत्वं संस्कृतसेवासु सम्प्राप्तम्।
बाला अपि वन्द्याः स्युः संस्कृतसाहित्यसंलग्नाः॥२२॥
किम्पुनरेते ये वा नूतनरचनासु सन्दीप्ताः।
रसनिर्झरपरिपूताः कवयो रचयन्ति संसारम्॥२३॥
तेष्वन्यतमा एते श्रीमच्छुक्ला रमाकान्ताः।
भारतमहिमा गीतो यैस्ते मयकाभिनन्द्यन्ते॥२४॥
हीरकवर्षसुपूर्तिर्विद्वन्मोदावहा भवतात्।
जयतात्तप एतेषां संस्कृतवाणी जयतु विश्वे॥२५॥

●

# अभिनन्दनम्

- प्रो. किशोर नाथ झा
राष्ट्रपति-सम्मानित, व्याकरण-साहित्याचार्य
एम.ए, पीएच.डी, विद्यावाचस्पति

**प्राक्तननव्यज्ञाने व्युत्पन्नः कोऽपि पण्डितः प्रथितः।**
**जयति रमादिःकान्तो विमलस्वान्तः सतां हिते रक्तः॥१॥**
**शुक्लो यशसा देशे शुक्लीकुर्वन् सदोपकृद्विदुषाम्।**
**विश्वेषामपि हृदये निवसन्नेकः स कीर्त्तनीयोऽस्ति॥२॥**
**यल्लेखनी प्रशस्ता मलिनमसीमपि निपीय सन्तनुते।**
**शुभ्रं यशः समन्तात् स भारतीभूतिभासितप्रज्ञः॥३॥**
**देशप्रेमविनिःसृतसंस्कृतकविता नवत्वमापन्ना।**
**सहृदयहृदयानन्दप्रदायिनी 'भाति मे भारतं' यस्य॥४॥**
**कमलोपमतत्करयोर्भावसुमनसां समर्पितः प्रीत्या।**
**अयमञ्जलिः प्रसादं मनसि वितनुतां सुनिर्मले तस्य॥५॥**

स्वस्ति ॥श्रीः॥

श्रीमत्सु विविधावदातविद्याविद्योतमानमानसेषु किशोरस्य नतयः सविनयं दीपावल्याः अद्यतन्याः शुभकामनाश्च। उभयत्र जय मङ्गला की कृपा से कुशलता प्रसन्नता अनारत रहे।

आपका अभिनन्दन हो रहा है यह सुनकर बहुत बहुत आनन्दित हुआ। चक्षुष्मान् प्राज्ञ के पूजन करने पर आयोजकवृन्द का अवश्य मंगल।

**प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः।**

ऐसा कालिदास ने कहा है। परवर्ती दार्शनिक महाकवि श्रीहर्ष ने नैषधीयचरितम् में कहा है-

**वाग्जन्म वैफल्यमसह्यशल्यं**
**गुणाद्भुते वस्तुनि मौनिता चेत्।**

आप सफल अध्यापक एवं कवि हैं जैसा मैं जानता हूँ-

**शिलष्टा क्रिया कस्यचिदात्मसंस्था**
**संक्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु स शिक्षकाणां**
**धुरि प्रतिष्ठापितव्य एव॥**

मालविकाग्निमित्र में कालिदास ने कहा है। आप इस पद्य का निदर्शन होते हुए-

**दुर्लभं मानुषं जन्म विद्या तत्र सुदुर्लभा।**
**कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा॥**

इस पद्य के भी साक्षात् उदाहरण हैं। इसलिए आपको नमन करता हूँ। मैं जो कुछ हूँ आप सभी सुधी जनों के अनुसरण से आप सब की पंक्ति में खड़ा रहने का साहस करता हूँ- यही भूतार्थ व्याहृति है।

**अनुध्यानेन जप्येन विधास्यामो शुभं तव।**
**कथाभिश्चाभिरम्याभिः सह रंस्यामहे वयम्॥**

धौम्य ने वनयात्रा के समय युधिष्ठिर से कहा है वही स्थिति आप सबकी और मेरी भी है।

**आपका सतत शुभानुध्यायी- किशोरनाथ**

११.११.२०१५ ई.

●

# नामाक्षरमाला

– आचार्यमिथिलाप्रसाद त्रिपाठी
५७ अ, वैशालीनगर, इन्दौर (म.प्र.)

श्रीसमेतो रमाराजितो लालितः
कान्तया कान्तकाव्यादिभिः शंसितः।
शुक्लभावैश्च शुक्लत्वमापादयन्
जीवितः स्याच्छताब्दं समाः भूतले॥१॥

रम्यतां रागितां राधयन् श्रावयन्
कोमलां कान्तपद्यावलीं गापयन्।
भारतीयं सुधावैभवं घोषयन्
भारतं भासयन् स्याच्छतायुः कविः॥२॥

मार्ष्टि गीर्वाक् सुधान्दोलितः संरवः
चित्तमास्वादभारोन्मदं गायने।
यस्य कण्ठे स्थितं भारतीगुञ्जनं
भातु शुक्लः शताब्दं समाः भारते॥३॥

कान्तकाव्यानुघोषानुरक्ता समा
पण्डितानां समन्ताद् रसैः रञ्जिता।
स्यान्निनादेन संपूरितं भारतं
भातु शुक्लेन मेऽनारतं भारतम्॥४॥

तत्कृतिं संस्मरन्तो लसन्तो बुधाः
वाग्विलासैर्मिथः श्रावयन्तो धिया।
भावयन्तो रमाकान्तवाग्वैभवं
भारते सन्तु कर्णेजपाः पण्डिताः॥५॥

शुक्लतां काव्यबन्धेषु संस्थापयन्
चारुतां पद्यगीतिष्वथोल्लासयन्।
ह्लादतां श्रोतृवृन्देषु संवर्द्धयन्
स्याद्रमाकान्तशुक्लः सदा भारते॥६॥

लब्धमानन्दमास्वाद्य काव्यश्रुतौ
संश्रुतं रागपूरोद्धृतं गर्जनम्।
वर्णयन्तः समे संस्कृतज्ञा मिथः
सन्तु तुष्टा रमाकान्तवाण्याऽनिशम्॥७॥

●

# कैर्न वन्द्यो रमाकान्तशुक्लः कविः

-डॉ. परमानन्द झा
महासचिवः,
मन्दाकिनीसंस्कृतविद्वत्परिषद्, नवदेहली

मञ्चमञ्चत्सु यो भाति मध्ये स्थितः
तुङ्गशृङ्गो हिमाद्रिर्यथोपस्थितः।
स्रग्विणीभिः स गर्जन् पयोदच्छविः
कैर्न वन्द्यो रमाकान्तशुक्लः कविः॥१॥

येन देशे विदेशे गृहे चत्वरे
पाठशाले विपण्यां पुरि प्रान्तरे।
श्रव्यदृश्यादिसञ्चारमार्गान्तरे ,
यूनि वृद्धे शिशौ पण्डिते पामरे॥२॥

गायताऽनारतं भाति मे भारतं
देववाण्याः स्वरूपं समालोकितम्।
सोऽद्य पद्मश्रियोद्द्योतमानो रविः
कैर्न वन्द्यो रमाकान्तशुक्लः कविः॥३॥

शैशवं यौवनं प्रौढमायुर्जरा
पुत्रपौत्राः कलत्रं वसत्यै धरा।
प्रातिभं वैभवं वित्तमूर्जा धृतिः
हास्यलास्यं प्रमोदः कवित्वं कृतिः॥४॥

येन सारस्वतेऽस्मिन् जगन्मन्दिरे
पावने देववाणीसपर्याध्वरे।
हेलयैवार्पितं जीवनं स्वं हविः
सोऽद्य वन्द्यो रमाकान्तशुक्लः कविः॥५॥

शिष्यवृन्दे सदा यो हृदा वत्सलः
मित्रवर्गेऽमृतासारकृत् कोमलः।
काव्यशास्त्रे समालोचनायां गुरुः
ज्ञानविज्ञानदाने च कल्पस्तरुः॥६॥
यः प्रसन्नस्वरप्रस्तुतौ किन्नरः
काव्यनव्यस्वरूपोपदेशाकरः ।
यस्य दृग् भ्रष्टलोके कठोरः पविः
सोऽभिनन्द्यो रमाकान्तशुक्लः कविः॥७॥

रचनातिथिः ( १७-०२-२०१३ )

●

# सा खिद्यते हाऽद्य सरस्वती किम्?

- प्रो. सुधीकान्तभारद्वाजः
२८-२९, जैन कालोनी पाई २
उत्तम नगर, नई दिल्ली-११००५९

या कथ्यते ब्रह्मयुतादिबीजं
सृष्टेस्तु चैतन्यविभा सुदीप्ता।
वाणीस्वरूपाखिललोकशक्तिः
सा खिद्यते हाऽद्य सरस्वती किम्॥१॥

ज्ञानस्वरूपा विदुषां सुविद्या
मूर्खेण साऽद्य ह्यपमानखिन्ना।
श्रीहीनविद्वत्सु निलीयमाना
गोपायति प्राणभरान् कथञ्चित्॥२॥

यस्या अभिव्यक्तिरनादिकालात्
गीर्वाणवाण्यामभवत् सुयोगात्।
सा क्षीयमाणा वपुषाल्पकाया
निर्देहरूपेण दधाति सत्ताम्॥३॥

उद्धर्तुकामो वचसां सुदेवीं
तामल्पकायामबुधैः सुभीताम्।
देधे प्रतिज्ञां मनसैकवीरः
शुक्लो 'रमाकान्त' उदीर्यमाणः॥४॥

सरस्वतीविग्रहधारिणीं सः
शक्तिं प्रदातुं खलु देववाणीम्।
प्रस्थापयामास मनोऽभिलाषैः
संस्थां सुविज्ञः खलु देववाणीम्॥५॥

प्रकाशितानेन बहुश्रमेणा-
र्वाचीनसाहित्यसमावधाना ।
महाशयाप्ता मधुराक्षरा च
गीर्वाणवाण्यां नवपत्रिकैका॥६॥

सेवानिवृत्तोऽपि न कार्यरिक्तः
करोति सेवां सततं सुधैर्यात्।
गीर्वाणवाण्या विविधैः प्रकारै-
रुत्साहपूर्णो मनसाप्तशक्तिः॥७॥

पत्नी च तस्यास्ति रमेव रम्या
कष्टेषु कालेषु सदानुकूला।
सौभाग्यलक्ष्मीः सुतरां हि साक्षात्
सेवां च पत्युर्विदधाति नित्यम्॥८॥

जीवेच्चिरं शुक्लमहोदयोऽसौ
पत्न्या हि सार्द्धं गतिमान् सशक्तिः।
कुर्वन् सदा लक्ष्ययुतां सुसेवां
गीर्वाणवाण्याः सुफलः प्रतुष्टः॥९॥

●

# श्रीशुक्लाष्टकम्

– हेमचन्द्र बेलवालः 'हिमांशुः'
रा. उ. मा. विद्यालयः,
घसाड पिथौरागढम्, उत्तराखण्डः

ज्ञानराशिप्रदाता गुरूणां गुरुः
काव्यसंसाररत्नं कवीनां कविः।
लोकचित्रं चरित्रं सतां वर्णयन्
श्रीरमाकान्तशुक्लो विभाति क्षितौ॥१॥

सर्वशुक्लोत्तरा–सर्वशुक्लाश्रयं ,
भाति मे भारतं भाति मे भारते।
यत्प्रणीतानि काव्यान्यनेकानि तं
श्रीरमाकान्तशुक्लं कविं नौम्यहम्॥२॥

मानवत्वस्य संरक्षिका सर्वदा
संस्कृतिर्भारतीया स्थिता यत्कृतौ।
यस्सदा संस्कृतां संस्कृतिं रक्षति
श्रीरमाकान्तशुक्लं कविं नौमि तम्॥३॥

कवीनामादर्शं कविकुलगुरुं नौमि सततं
कृता येनेहादौ विविधकृतयो भावभरिताः।
रमाकान्तं शुक्लं नवयुगकविं नौमि च पुनः
करोत्यद्यत्वे यः प्रतिजनसुखायोत्तमकृतीः॥४॥

यावद् भाति धरातले मृदुजला गङ्गा पवित्रा नदी
यावत् सूर्यशशिप्रभा भवति लोकालोककर्त्री तथा।
यावच्च प्रकृतिस्थिता हरितिमाऽस्ते मानसप्रीतये
तावज्जीवतु सज्जनो भुवि रमाकान्तः स शुक्लः कविः॥५॥

शुक्लः शुक्लो रमयति मनः काव्यशास्त्रीयलोके
नव्ये लोके रचयति यतो नव्यकाव्यानि नित्यम्।
छन्दोबद्धाः किमुत रचना मुक्तकेष्वस्य यास्ता
गीयन्ते भारतभुवि सदा मुक्तकण्ठैः सभासु॥६॥

विद्वांल्लोके शशिरथ रविः कथ्यते लब्धकीर्तिः,
कश्चिद्वा तं कथयति हृदा मानवानां मनोवित्।
केचिच्चापि प्रभवजनितं रत्नमाहुस्तमिष्टं,
सत्सन्तं केवलमहममुं वेद्मि देवावतारम्॥७॥

श्रीराधावल्लभकवितया राजराजेन्द्रकाव्यैः
इच्छारामप्रणवककविताभिस्स्तुतिर्यस्य जाता।
काव्यारम्भाय नवकविभिर्गीयते यत्कृतित्वमं
'पद्मश्रीः' श्रीपतिरवतु स श्रीरमाकान्तशुक्लः॥८॥

●

# आचार्यरमाकान्तशुक्लाष्टकम्

– प्रो. रमाकान्तपाण्डेयः
निदेशकः, मुक्तस्वाध्यायपीठम्,
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

उत्तरे भारते खूरजामण्डले
विप्रवंशे जनिं प्राप्य शिक्षान्वितः।
राजधान्यां सदाऽध्यापयद् यो मुदा
वन्द्यतेऽसौ रमाकान्तशुक्लो मया॥१॥

देववाणीं भजन् देववाणीसभां
सम्प्रतिष्ठाप्य देशे नवं संस्कृतम्।
मुक्तकण्ठेन गायन् लिखन् राजते
पूज्यते श्रीरमाकान्तशुक्लोऽधुना॥२॥

हिन्दभाषा भवेत् प्राकृतं वा भवेत्
कालिदासोऽर्जुनो जायसी वा कविः।
सर्वमध्याप्य शिष्यप्रियो योऽभवद्
गीयतेऽसौ रमाकान्तशुक्लोऽधुना॥३॥

'भाति मे भारतं' सस्वरं कीर्तयन्
भारतीयप्रजायाः सुखं सूचयन्।
सर्वशुक्लां तथा गान्धिगीतं लिखन्
श्रीरमाकान्तशुक्लो भवेद् भारतः॥४॥

भूतले जह्नुकन्या च कृष्णप्रिया
शोभते व्योम्नि सूर्यश्च चन्द्रो यथा।
मिश्रराजेन्द्रपुष्पारथैर्वल्लभैः ,
राजतां श्रीरमाकान्तशुक्लस्तथा॥५॥

आयुषा विद्यया श्रीसमृद्ध्या भयं
देववाण्या हरन् सत्कवित्वान्वितः।
श्रीरमाकान्तशुक्लश्चिरं मोदतां
भूतले संस्कृताराधको निर्भयम्॥६॥

भारताध्यक्षवर्येण पद्मश्रियाऽऽ-
राधितो भारतीपादपद्मव्रती।
काव्यकल्पप्ररोहैः सदा वर्धतां
श्रीरमाकान्तशुक्लो रमारञ्जितः॥७॥

जयति जयति हिन्दी राष्ट्रभाषाऽथ दिव्या
जयति विबुधवन्द्या संस्कृता वाक् पुराणी।
जयति निखिलशास्त्राध्येतृवर्यो मनस्वी
सुकविनिकरपद्मश्रीरमाकान्तशुक्लः ॥८॥

●

# भातु शुक्लो रमाकान्तो भूतले

**डॉ. रामजियावनपाण्डेयः**

पूर्वप्राचार्यः,
त्रिलोकनाथस्नातकोत्तरमहाविद्यालयस्य,
टाँडा, अम्बेडकरनगर-२२४१९०(उ.प्र.)

गीतं श्रावयन् 'भाति मे भारतम्.....'।
भातु शुक्लो रमाकान्तो भूतले॥१॥

निर्झरन्निर्झरीं भारतीं माधुरीम्।
नीतिरीतिगीतिलसिकामुद्गिरन्भूतले ॥२॥

शुभां मङ्गलां, भाति शुक्लो रमाकान्तो जगत्याम्।
'भाति मेऽनारतं ...' कीर्तयन्कीर्तयन्॥३॥

प्राच्य-सम्मेलनेषु वै समयं ददन्।
सङ्कोचमपहार्य काव्य-पाठायोत्साहयन्/
काव्य-पाठाय तु प्रोत्साहयन्॥४॥

मादृशाच्छिशुमुखात्काव्य-कलितां प्रवाह्य।
येन कवयः मादृशाः बालिशाः॥५॥

भातु शुक्लो रमाकान्तो भारते।
देशे विदेशे निर्भरन्माधुरीं रसमयीम्॥६॥

देववाणीं समुत्थापयन्मधुमयीम्।
भातु शुक्लो रमाकान्तो वै जगति॥७॥

अमृतं तु निपीय पञ्चसप्ततिकां गतः।
शतकाच्छुक्लो सरेद्रमाकान्तः सुखम्॥८॥

देववाणी-हिताय संस्कृतिविस्तराय ननु।
काव्यकान्तो सरेद्रमाकान्तोऽस्मदीयः॥९॥

'पद्मश्री' वै ज्येष्ठं प्रणम्य तं सखे!
'शतं जीवेति' लब्धा सस्नेहं मुदा।

कामनेयं, वयमप्यनुसरेम तं सदा,
भारतीन्तु शुभां कीर्तयन्तः ध्रुवम्॥१०॥

शास्त्रमाधुरीं तु निपीय वै दुग्धोपमाम्।
भातु मल्ल इव शास्त्रमल्लो रमाकान्तो मुदा॥११॥

(दिनाङ्क १५.१०.२०१५)

●

# सुधीः सम्पादकः श्रेष्ठः

- डॉ. कैलाशनाथ द्विवेदी
पूर्व प्राचार्यः,
कुसुमकुलायः, अजीतमल (औरैया)
उ.प्र.२०६१२१ मो. ९७५१३४१८७८

भास्वरं भारतं भव्यं ज्ञानालोकेन भूतले।
ज्ञानरश्मिमयी शुभ्रा सेव्या संस्कृतभारती॥१॥
संस्कृतस्य सुसेवायां संलग्नः सेवकः सुधीः।
श्रीरमाकान्तशुक्लोऽयं संस्तुत्यः सादरेण वै॥२॥
नैकमान्यपुरस्कारैर्नानाविरुदभूषितः ।
श्रीशुक्लस्य सुविख्याता, 'भाति मे भारतं' कृतिः॥३॥
स्वनीरक्षीरमत्यैव हंस इव सुशोभितः।
दत्वा'ऽर्वाचीनसंस्कृतं' सत्यमेव यशोधरः॥४॥
प्राच्यविद्याप्रवीणोऽयं नैकशास्त्रविशारदः।
श्रेष्ठः कविस्तु मेधावी शृङ्गारः संस्कृतस्य च॥५॥
अभिनन्द्यस्त्वनिन्द्योऽस्ति संस्कृताराधकः सदा।
सुकीर्तिमतुलां लब्ध्वाऽमृतोऽजरो भवेद्भुवि॥६॥
सुधीः सम्पादकः श्रेष्ठः संस्कृताराधने रतः।
पञ्चसप्ततिवर्षेऽयं सादरमभिनन्द्यते॥७॥
पद्मश्रिया समायुक्तः पद्मपत्रमिवाम्भसा।
निर्लिप्तः पङ्क्तिले लोके श्रीशुक्लोऽयं समुज्ज्वलः॥८॥
नैकग्रन्थनिधिं नीत्वा नव्ये नीराजनाऽजिरे।
साहित्यसर्जने मग्नः जीवेत्सः शरदः शतम्॥९॥
लाभान्वितो भवेल्लोकः सुविचारेण सर्वदा।
सच्चिन्तकः कृती धीमान् जीवेच्च शरदः शतम्॥१०॥
अस्याऽभिनन्दनेनैव ग्रन्थोऽयं सफलो भवेत्।
कीर्तिरक्षासुकार्येण शाश्वती संस्कृतिरिह॥११॥

●

# श्रीरमाकान्तशुक्लं नमामो वयम्

- डॉ. रामलखनपाण्डेयः

देववाणीविकासे नवीनं बलं
भारतीये प्रकाशे प्रभावोज्ज्वलम्।
दिग्दलं दर्शयन्तं पुनः प्राञ्जलं
श्रीरमाकान्तशुक्लं नमामो वयम्॥१॥

वैदुषी मास्तु मा स्यादुदग्रा मतिः
मास्तु भव्यं पदं मास्तु दिव्या कृतिः।
हृद्गतं भावमेवार्पयन्तं सदा
श्रीरमाकान्तशुक्लं नमामो वयम्॥२॥

पैतृकं रिक्थमादाय मुक्तैः करैः
संस्कृतं नाम तद्वैभवं भारते।
प्रत्यहं प्रीतिपूर्वं किरन्तं जनं
श्रीरमाकान्तशुक्लं नमामो वयम्॥३॥

●

# पद्मश्री-समलङ्कृतः रमाकान्तः सुशोभते

- आचार्य चन्द्रशेखर शर्मा
केन्द्रीय विद्यालय, वायुसेना स्थल,
सेक्टर १४, गुडगाँव, हरियाणा

उत्तरोऽयं प्रदेशोऽस्ति खुर्जा तत्र विराजते।
राधाकृष्णो विद्याकेन्द्रः, धन्यः शुक्ल-शिक्षालयः॥

प्रियम्वदा शुक्ला माता, ब्रह्मानन्दशुक्लः पिता।
शुक्ल-कुले सुतो जातः, रमाकान्तः सुशोभते॥

'पद्मश्रीः' मानप्राप्तोऽयं, संस्कृत-कुलभूषणः।
विद्या-शील-यशो-मूर्तिः, रमाकान्तः सुशोभते॥

भारती-कविः श्रेष्ठोऽयं, भारती-गीत-गायकः।
भारती-सेवमानो हि, रमाकान्तः सुशोभते॥

भारत-गुणगाथां वै, गायति वचसा सदा।
मनोहर्ता तु श्रोतॄणां, रमाकान्तः सुशोभते॥

विद्याप्रियः विद्याभानुः, विद्योत्तमः विद्योदधिः।
विद्यागुरुः विद्यामूर्तिः, रमाकान्तः सुशोभते॥

नररत्नो नरेन्द्रोऽयं, नरसिंहो नरोत्तमः।
नृभूषणो नृमणिश्चैव, रमाकान्तः सुशोभते॥

रमाकान्तः विद्याकान्तः, तपोमूर्तिस्तपोधनाः।
शुक्लस्तु सुकुले जातः, रमाकान्तः सुशोभते॥

संस्कृते वेद-वेदाङ्गं, धर्म-दर्शन-तत्त्वानि।
साधको देववाण्याः हि, रमाकान्तः सुशोभते॥

संस्कृत-ज्ञान-गङ्गायाः, शास्त्रोदकं च पावनम्।
पाययति अन्यान् पीत्वा, रमाकान्तः सुशोभते॥

देववाणी परा भाषा, निर्मला सरसा रसा।
नवरस-कवीशोऽयं, रमाकान्तः सुशोभते॥

साहित्य-साधना-श्रेष्ठा, साहित्यं मे परं धनम्।
साहित्य-कवि-ज्येष्ठोऽयं, रमाकान्तः सुशोभते॥

आवास–
GH-8/164, Pascim Vihar,
New Delhi-110087

●

# यस्मादस्मद्भारतं भाति भूमौ

(स्रग्विणीकविपद्मश्रीमद्रमाकान्तशुक्लान् प्रति कृतावेदितावेदनम्)

डॉ. बलरामशुक्लः
सह-आचार्यः, संस्कृत विभागः,
दिल्लीविश्वविद्यालयः

येषामेतद्देववाणीविलासो ,
यस्मादस्मद्भारतं भाति भूमौ।
शालीनाभिश्शालिनीभिस्त एते
सम्बोध्यन्ते श्रीरमाकान्तशुक्लाः॥१॥

आगत्यात्र च्छन्दसां गीतिरीतिं
यच्छालायां प्रोक्तवन्तो भवन्तः।
आहूयास्मान् पण्डितेन्द्रप्रसङ्गे
पद्यप्राये पूर्णपूर्णानकुर्वन् ॥२॥

अस्माकं यत्प्रेरितश्छात्रवर्गः
पीयूषाभैस्सद्वचोभिर्भवद्भिः ।
तत्सौभाग्यं छात्रकालेऽनवाप्तं
पुण्यापाकात् पीडयत्यस्मदादीन्॥३॥

साक्षात्कारो यत्कृते पत्रिकाया
दत्तस्सद्योऽस्तीन्द्रप्रस्थाभिधायाः।
एतत्सर्वं श्रीमतां युक्तमास्ते
नित्यं नूत्ने छात्रवार्ते रतानाम्॥४॥

सौजन्यार्थं यद्भवत्सोदराभं
कारुण्यार्थं यस्य लाभात्कृतार्थाः।
जानीमस्त्वान् धन्यधन्यांस्तदर्थं
स्वार्थानग्रेऽपीक्षमाणाः पुनस्तान्॥५॥

●

# सर्वशुक्ला सरस्वती

- मिश्रोऽ'भिराज'राजेन्द्रः
पूर्वकुलपतिः, सं.वि.वि., वाराणसी

**शुक्लं वपुर्मनश्शुक्लं शुक्ला दृष्टिर्यशस्विनी।**
**श्रीरमाकान्तशुक्लानां सर्वशुक्ला सरस्वती॥**

अग्रजवर्याणामाचार्यरमाकान्तशुक्लानां प्रच्छायशीतले सौहार्दे प्रायेण ममार्धशती व्यतीता। सौभाग्यवशादावयोर्मध्ये न कदापि जातो विवादो वाचिको नैसर्गिको वा। स यथा यादृग्वाऽऽसीत् चत्वारिंशद्वर्षपूर्वमद्यापि तथा तादृगेव विद्यते। पूर्ववदेव मयाऽद्यापि युवा परिलक्ष्यते। मय्यतितरां स्निह्यति पूर्ववदेव।

अद्याप्यहं तानि दिनानि स्मरामि यदोज्जयिन्यां कालिदाससमारोहे काव्यपाठं कुर्वता मया सार्धमग्रजवरश्शुक्लोऽपि गानरतो जायते स्म। विशेषतस्तु **जीवनं रोचते नो विधानं विनेति, जीवामि भूतलेऽहमिति, नहि जगदतिरुचिरं त्वया विनेति** गीतत्रयगानावसरे शुक्लवर्यस्सदैव मम सहचरो जायते स्म। संवादिकण्ठस्वरवशादावयोः सम्मिलितं कण्ठमाधुर्यं श्रोतॄनतितरामाह्लादयति स्म। श्रोतृषु च तेषु श्रीमती कमलारत्नं, डॉ. शिवमङ्गलसिंह-सुमनादयो महामहिमशालिनोऽपि भवन्ति स्म।

**ते हि नो दिवसा गताः।**

अर्वाचीनसंस्कृतकवितां लोकप्रियां जनजनव्यापिनीञ्च विधातुं यदान्दोलनं प्रवृत्तं विगतशताब्द्याः सप्तमे दशके तस्मिन् महती भूमिकाऽऽसीत् डॉ. रमाकान्तशुक्लमहाभागानाम्। प्रारम्भत एवाऽसौ राष्ट्रमाहात्म्यमेव स्वकाव्यविषयं कृतवान्। स्रग्विणीच्छन्दसा प्रणीतानि **भाति मे भारत**मिति चतुर्थचरणान्तानि तदुपज्ञकाव्यानि त्वरितगत्या रसिककण्ठहारायमाणानि सञ्जातानि। स्वरमाधुर्योच्चारणवैशद्यवशीभूता श्रोतृसभा स्वयमेव गीतस्य तुर्यवरणमनुवदति स्म। सहसैव शाकुन्तलपद्यमिदं स्मृतं भवति स्म-

**तवास्मि गीतरागेण हारिणा प्रसभं हृतः।**
**एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा॥**

श्रीशुक्लमहोदयानां काव्यसाधनायाः प्रत्यक्षद्रष्टाऽहमस्मि। सन्त्यनेके समीक्षाबिन्दवस्तत्काव्यसाधनाया येषां चर्चा मयाऽत्र करिष्यते। परन्तु किञ्चित्कथनात्पूर्वं तथ्यमिदं सनिष्ठं प्रतिपादयिष्यामि यत्संस्कृतभाषया कविरयं तथा नोपकृतो यथाऽनेन संस्कृतभाषा। स्वकीयैर्नाट्यप्रयोगैः, स्वकाव्यपाठैश्च देववाणीं गृहे-गृहे, चित्ते-चित्ते समासादयन् शुक्लवर्यो युगकविर्जातः। दूरदर्शने धारावाहिकरूपेण प्रसारितं तत्काव्यं **भाति मे भारत**मिति सुभाषितान्तं प्रतिकण्ठं प्रतिजिह्वं स्थिरं जातम्। एतादृशमक्षयं काव्ययशः प्रायेण दुर्लभमेव भवति सिद्धकवीनां कृते परन्तु तदेवाऽसीत् सुलभतमं श्रीरमाकान्तशुक्लानां कृते।

भवतु, प्रकृतमनुसरामस्तावत्। रमाकान्तकवित्वविषये सन्त्येव साम्प्रतिक-समीक्षकाणामनेका विप्रतिपत्तयः। कवित्वमतिशेतेतरां तत्कण्ठध्वनिरित्येके। इतिवृत्तवर्णनमात्रपर्यवसितं तत्कवित्वमित्यपरे। व्यङ्ग्यार्थविरहिताऽस्ति तत्कवितेत्यन्ये। प्रचारतन्त्रैकलक्ष्या तत्पदावलिरित्यप्येके। एतत्सर्वं मयाधिमञ्चमेव प्रत्यक्षं श्रुतम्। तत्र नास्ति कापि संशीतिर्यत्सङ्गीतमधुरा प्रस्तुतिः शुक्लवर्यस्य कविसमज्यासु रसिकाश्च्योतनकं सृजत्येव। परन्तु यदि निन्दति लघुस्तनी नारी बृहत्पयोधरां कामिनीं तदत्र किन्नु करणीयम्? कण्ठध्वनिमाधुर्यवतामतथा-भूतानाञ्च तुल्या स्थितिः। स्थितिरियं दैवाधीना। ये कण्ठमाधुर्यवन्तस्ते लयरागविरहितं काव्यं कथं नु प्रस्तुयुः। ये च दुर्भाग्यवशात्कुण्ठितकण्ठास्तेऽपि सलयं सरागं कथं काव्यं समुपस्थापयेयुः। एवं हि उभावेव नियतिपराधीनौ। तदत्र, न कोऽपि विवादस्समुचितः प्रतिभाति। सङ्गीतं तावद्दैववरदानम्। तत् श्रद्धेयं तत्त्वम्। न पुनर्विद्वेषहेतुः।

दुर्भाग्यवशान्मयाऽपि तद् दैववरदानं केनचिदंशेन समवाप्तम्। तन्ममापि कृते कश्चिदेवमेव विकृतं कथयेत् अत एव क्वचिल्लिखितं मया-

**सभायां समुत्कण्ठमानेऽभिराजे कवित्वद्रुहां नीरसानां न सौख्यम्।**

आचार्यरमाकान्तोऽपि निर्भयं वक्ति-

**रथरमाकान्तराजेन्द्रमिश्रकवितालहरीः पायं पायम्।**
**विस्मरति सुधाधारामपि या सा रसिका भारतजनताहम्।**

यथा वाऽन्यत्र

**रमाकान्तोऽभिराजो वा रथो वा**
**श्रुतो यदि न त्वया किं जीवनन्ते॥**

वस्तुत एतेषु कथनेषु वर्तते किञ्चित् सङ्केतमात्रम्। यदा ध्वनिकारः कथयति अस्मिन्नतिविचित्रपरम्परावाहिनि संसारे द्वित्राः पञ्चषाः वा कालिदासप्रभृतयो वर्तन्ते महाकवयः इति। कथनेऽस्मिन् प्रभृतिशब्देनैव कालिदासतुल्यप्रतिभानां कव्यन्तराणां बोधो जायते। रमाकान्तशुक्लोऽपि नामत्रयमात्रमभिदधत् न केवलं कवित्रयायैव स्पृहयति। वस्तुतोऽसौ रङ्गरञ्जयितॄन् रक्तकण्ठान् पाठ्यप्रस्तुतिपारङ्गतान् अन्यानपि समसामयिकान् कवीन् संस्मरति। तत्र पुष्पाराधावल्लभप्रणवमणिहरिरामाचार्यादीनामपि समावेशो ध्वन्यते। अत एव तत्सङ्केतोऽयं सम्यक्तया ग्राह्यः।

तदत्राऽवधेयं यद्रमाकान्तशुक्लानां काव्यप्रस्तुतिः प्रसह्याकर्षति सहृदयसमज्याम्। समुत्थित एव अस्मिन् सभा सङ्गीतमनस्का सञ्जायते। यदा च कविना रमाकान्तेन पद्यस्य पादत्रये गीते सति जनता चतुर्थचरणमनुवदति तदा समग्र एव रङ्गः कैन्नरीं श्रियं भजत्येव। तदित्थं सङ्गीतं श्रीशुक्लवर्याणां वरेण्यः काव्यगुणः। स्रग्विणीच्छन्दसा प्रणीतं **भाति मे भारत**मिति काव्यं तत्सङ्गीतं समधिकप्रभविष्णुतया मुखरयति, यतो हि छन्दस्यस्मिन् पदबन्धलयात्मकता मूर्द्धन्या वर्तते। भारतप्रशस्तिपरकमिदं काव्यं भारतसिंहनाद इव प्रतीयते। एतदेव समुत्प्रेक्ष्य मया लिखितं स्वोपज्ञे सुरभारतीदण्डके- **सिंहनादस्तदीयो रमाकान्तको भाति यस्याननेऽनारतं भारतम्।** इति।

**भाति मे भारतम्, जयभारतभूमे, भारतजनताऽहम्** इति काव्यवागाम्भृणी आत्मानं परब्रह्मणा सहाऽद्वैतभावमुपनयन्ती स्वयमेव परब्रह्म जायते, परब्रह्मोद्गारांश्च व्यनक्ति- **अहं राष्ट्री संगमनी वसूना**मित्येवमादि सर्वथा तथैव ब्रह्मानन्दनन्दनोऽयं सिद्धकविरपि क्वचित्साक्षाद् भारतीभूय, क्वचिच्च भारतप्रजाजनीभूय भारतोद्गारान् अभिव्यनक्ति। अत्र काव्यवैशिष्ट्यं वर्तते कविभारतराष्ट्रयोस्तादात्म्ये। वैशिष्ट्यं वर्तते भारतोद्गारे, भारतजनतोद्गारे च। यदि कविर्भारतात्पृथग्भूय, भारताद्वाऽत्मपार्थक्यमनुभवन् किञ्चिदकथयिष्यत् तर्हि निश्चप्रचं तत्काव्यं हीनगुणं सामान्यगुणमेवाऽभविष्यत्। परन्तु नाऽत्र काव्ये कविर्भारताद्बहिस्तिष्ठति। भारते भारतत्वे वा विलीनोऽसौ साक्षाद् भारतराष्ट्रमेव। अत एव तद्वाण्यपि भारतस्य वाणी, न पुनः कस्यचिद्रमाकान्त-शुक्लस्य-

**बुद्‌बुदाभा नृपा यत्र याता लयं यत्र विद्वान् कविश्चामरो राजते।**
**यत्र चेष्टं यशो नैव देहप्रभा भूतले भाति तन्मामकं भारतम्॥**
**यस्य तिष्ठन्ति गेया अनेके गुणा यस्य तिष्ठन्ति गेया अनेकाः क्रियाः।**
**अस्ति यस्मिन्ननेकत्व एकस्थितिर्भूतले भाति तन्मामकं भारतम्॥**
**जीवदास्ते न जानामि कस्माद्युगात् साम्प्रतं निर्धनत्वेऽपि सञ्जीवति।**
**मृत्युहीनं जराहीनमाशान्वितं भूतले भाति मेऽनारतं भारतम्।**
**शोषितो नात्र कश्चिद् भवेत्केनचिद् व्याधिना पीडितो नो भवेत्कश्चन।**
**नात्र कोऽपि व्रजेद् दीनतां हीनतां मोदतां मे सदा पावनं भारतम्॥**

सन्दर्भाणां प्राचुर्येऽपि, वर्ण्यविषयाणां बाहुल्येऽपि यदा समग्रस्यापि काव्यस्यान्तस्संवेदना तुल्या जायते तदैव सम्भवति काव्यस्य महावाक्यत्वम्। रामायणमहाभारतादिषु प्राचीनकाव्येषु वैशिष्ट्यमेतदेव परिलक्ष्यते। तथा च निर्णीतं ध्वनिकारेण **रामायणे हि करुणो रसो यथादिकविना स्वयमेव सूचितः। काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा। क्रौञ्चद्वन्द्व-वियोगोत्थः शोकः श्लोकत्वमागतः।**

भारतमपि विकटसङ्ग्रामपरायणमापाततो वीरभयानकबीभत्सप्रधानमेव काव्यं परिलक्ष्यते। परन्तु नैतत्। महाभारतस्यापि महावाक्यता शान्तरस एव पर्यवसिता। तद्यथा महाकविः क्षेमेन्द्रः,

**रत्नोदारचतुस्समुद्ररशनां भुक्त्वा भुवं कौरवो**
**भग्नोरुः पतितस्स निष्परिजनो जीवन् वृकैर्भक्षितः।**
**गोपैर्विश्वजयी जितस्स विजयः कक्षैः क्षिता वृष्णय-**
**स्तस्मात्सर्वमिदं विचार्य सुचिरं शान्त्यै मनो दीयताम्।**

महावाक्यतासन्दर्भे निगदत्याचार्यो राधावल्लभः- **नानादिक्कालावच्छिन्नानां वाक्यानां पुरुषार्थप्रवर्तकः समूहो महावाक्यम्** (अभिनवकाव्यालंकारसूत्रम्। १.४.४)

पुनश्च वृत्तौ व्याख्याति-

**यथा चतुरङ्गसैन्ये हस्तिसैन्याश्वसैन्यपदातिसैन्यानि संहत्य एकीभावमापन्नानि जयश्रियोऽवाप्तये व्यूहन्ते सन्नह्यन्ते तथैव महावाक्यगतानि वाक्यानि। तत्तत्प्रकरणादिषु वाक्यानां समुच्चया अपि**

**मिलित्वा प्रबन्धस्यैकवाक्यतां निर्मान्ति यथा युद्धे सैन्यानां नानाव्यूहाः परस्परं सन्नह्यन्ते। इति।** (अभिनव. पृ. २१)

अतीव रुचिरा तात्त्विकी च व्याख्या।

इयमेव महावाक्यताऽवलोक्यते शुक्लवर्याणां काव्येषु। शतमिता भावनद्यस्तस्य एकस्मिन्नेव राष्ट्रियतोदधौ समाविशन्ति। भारतस्य विविधजनपदानां नामस्मरणं, प्राक्तनसंस्कृतिगौरवबिन्दवः, ऐतिहासिक्यः स्मरणीयाः घटनाः, त्यागौदार्यपरोपकारविश्वमाङ्गल्यादिप्रयासवृत्तानि, प्रकृतिपरिवर्तनचित्राणि, भोजनपानपरिधानाभिरुचिवैभिन्न्यवार्ताः, वेदस्मृतिपुराणागमसम्मतजीवनविद्याः, स्वाधीनतासंग्रामघटनाः, स्वातन्त्र्यप्राप्त्युत्तरविकासतामात्रं रचयति। तन्महावाक्यत्वमस्ति राष्ट्रभक्तिरसः। राष्ट्रप्रणयभावः, राष्ट्रासक्तिः, राष्ट्रानुरागो वा। ईदृशी महावाक्यता प्रायेण सिद्धकविसाध्यैव भवति। ईदृशं काव्यमाचार्यो राधावल्लभ उत्तमोत्तमं घोषयति- **महालंकारघटितं महावाक्यसमन्वितम्। उत्तमोत्तमं भवेत्काव्यं पुरुषार्थप्रवर्तकम्॥**

प्रागेव मया **भारतजनताऽहमि**त्याख्यायाः कवितायाश्चर्चा कृता। यथोक्तं साहित्यदर्पणकारादिभिराचार्यैर्यन्नटो रामादिपात्राणां भूमिकां निर्वहन् परकायप्रवेशमिव विदधाति। यावदसौ स्वत्वमपहाय रामत्वं न गृह्णाति साङ्गोपाङ्गतया, तावदसौ रामावस्थानामनुकरणे शक्तो न भविष्यति। वस्तुतः परकायप्रवेशं न केवलं नटः करोति। कविरपि रचनासमाधौ तादृशीमेव समाधिमुपगच्छति। कविः काव्यं रचयन् पात्राणां संवादान् शृणोति, तेषां विविधान् व्यवहारान् प्रत्यक्षं निभालयते। अन्यथा कथं कविकुलगुरुणा कालिदासेन ज्ञातं यद्देवी वैदेही वाक्यमिदमेव निजगाद दयितं प्रति **वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि मत्समक्षमि**त्यादि। कथं वा तेन दिलीपं प्रति कुम्भोदरवचनमिदमुदाहृतम्- **अलं महीपाल! तव श्रमेणेति।**

काव्यं स्याद् दृश्यं श्रव्यं वा। काव्यं स्याद् मुक्तकं प्रबन्धात्मकं वा। कथ्यतथ्येन सार्धं रचनाकारस्य हृदयसंवादस्तु जायत एव।

डॉ. रमाकान्तशुक्लोऽपि यदा भारतजनतया सह तादात्म्यमुपैति तथा स्वयमेवात्मानमभिव्यनक्ति -

अभिमानधना विनयोपेता शालीना भारतजनताऽहम्।
कुलिशादपि कठिना कुसुमादपि सुकुमारा भारतजनताऽहम्॥
विश्वस्मिन् जगति गताहमस्मि, विश्वस्मिन् जगति सदा दृश्ये।
विंश्वस्मिन् जगति करोमि कर्म, कर्मण्या भारतजनताऽहम्॥
किं किं न तपस्तप्तं हि मया, स्वातन्त्र्यदेवताराधनाय।
किं किं न सहे तद्रक्षार्थं, श्रमशीला भारतजनताऽहम्।
दम्भोलिसन्निभा अपि विपदोऽनायासमेव सर्वा हि सहे।
विषपानपराऽपि स्मितवदना, सर्वंसहभारतजनताऽहम्।
मैत्री मे सहजा प्रकृतिरस्ति, नो दुर्बलतायाः पर्यायः।
मित्रस्य चक्षुषा संसारं, पश्यन्ती भारतजनताऽहम्।
जिह्वां मे कीलयितुं शक्तः कः कोऽत्र जगति मातुर्जातः।
वाणी विहरति मे सदोज्ज्वला, गर्जन्ती भारतजनताऽहम्।
अभितः परितः समया निकषा मां यद्घटते तत्प्रेक्षेऽहम्।
सर्वस्य कृते खलु सज्जा या सावहिता भारतजनताऽहम्।
परतन्त्रो मा भूत्वापि कोऽपि, सर्वः सर्वत्र सदा नन्दतु।
जगतः स्वतन्त्रतामिच्छन्ती मोदे खलु भारतजनताऽहम्।

– (भारतजनताऽहम् पृ. ३३-४२)

प्रत्येकं कवेः काव्यरचनास्रोतांसि पृथग् भवन्ति। भामहदृशा **शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः। लोको युक्तिः कलाश्चेति मन्तव्याः काव्यगैर्ह्यमी।** वामनरुद्रटमम्मटादयोऽपि काव्यस्रोतश्चयं वर्णयन्त्येव। परन्तु यथोक्तमाचार्यक्षेमेन्द्रेण–

**रसे-रसे तन्मयतां गतस्य गुणे-गुणे हर्षवशीकृतस्य।**
**विवेकसेकस्वकपाकभिन्नं मनः प्रसूतेऽङ्कुरवत्कवित्वम्।**

तन्मेऽतितरां समुचितं प्रतिभाति। मनोऽनुकूलरसे तन्मयतां गतस्य, मनोऽभिलषितनायकनायिकादिपात्रगुणेषु हर्षवशीकृतस्य रचनाकारस्य मनस्तथा कवित्वं प्रसूते यथा धरागर्भोऽङ्कुरं सृजति। कीदृशं मनः? विवेकसेकस्वकपाकभिन्नम्। अश्रुतमेव वर्णनमिदं काव्योज्जृम्भणस्य। धरागर्भाद् अङ्कुरस्य प्रस्फुटनमेव स्वच्छन्दोच्छलनम् आंग्लकवेर्वर्ड्सवर्थस्य। इयमेव नैसर्गिकी प्रक्रिया

काव्योद्गमस्य।

डॉ. रमाकान्तशुक्लानामपि काव्यरचनाप्रक्रिया क्षेमेन्द्राभिमतैव प्रतीयते। नाऽसौ वैय्याकरणः, न चापि छन्दोऽभिधानकोषयुक्तिकलाविदां मूर्द्धन्यः। शतमिता अन्ये समसामयिकाः कवयस्तमतिशयानाः स्युः। का हानिः? किमाश्चर्यम्? परन्तु स्वाभिरुचितं रसं, स्वाभिरुचितमितिवृत्तं वा समवलम्ब्य पूर्णनिष्ठया निर्दुष्टं प्रणेतुं कवयितुं वा कियन्तः क्षमाः? शृङ्गारं पल्लवयन्तोऽपि कवयः शृङ्गाराभासं प्रस्तुवन्त्येव। वीररसं निबध्नन्तोऽपि जायन्त एवोपहासास्पदाः। वस्तुतो वर्ण्यविषयस्य साङ्गोपाङ्गवर्णनक्षमत्वमेव कवित्वम्।

तया दृशाऽपि शिखरस्थो रमाकान्तः। यदि राष्ट्रभक्तिस्तस्याभिमता, तर्हि तद्वर्णनेऽसावप्रतिमः। प्रत्यग्रसामाजिकगतिविधिवर्णनरसिकोऽयं कविः। स्वोपज्ञेषु मुक्तकगीतेष्वप्यद्भुतं कौशलं जनयति हृद्यानवद्यसुभाषितेन। सुभाषितशैलीयं रसिकान् श्रोतॄन् प्रसह्य वशीकरोति। अस्यां शैल्यां प्रतिपद्यमेव चतुर्थचरणं सुभाषितं सन्निखातं जायते श्रोतृहृत्सु।

**वाणीं वयं वन्दामहे, सुरभारती विजयते, अहं स्वतन्त्रता भणामि, स्वागतं पयोद ते, वदत नेतारो मनाक्, किं जीवनं ते, वन्दनीयास्ते, वन्द्यतां कापि सा शासनासन्दिका, लोकतन्त्रेऽस्मिन्, प्रणम्याः कारगिलवीराः** इतिशीर्षकैर्निबद्धाः सर्वा एव कविताः शुक्लवर्यस्य सुभाषितान्ता एव वर्तन्ते। एतच्चतुर्थं चरणं निशिताक्षरो मन्त्र इव हृदिस्थो जायते। सम्पूर्णाऽपि कविताऽनपेक्षिता जायते, परन्तु चतुर्थचरणमात्रं समग्रकाव्यरसमर्पयितुं समर्थं प्रभवति।

गुणविशिष्टाय महाकवये ममाऽनन्ताः प्रणामाः शतायुष्य-शुभकामनाश्च विलसन्तुतराम्। वात्सल्य-सौजन्य-वैदुष्यत्रिवेणीपरिस्नातं कविकुलशेखरमग्रजवर्यं डॉ. रमाकान्तशुक्लं भूयोभूयः प्रणमामि।

मिश्रोऽभिराजराजेन्द्रः

२८.११.२०१०

●

# डॉ. रमाकान्तशुक्लवर्यस्य काव्यवैशिष्ट्यम्

**डॉ.जनार्दनप्रसादपाण्डेयो मणिः**
प्राचार्यः, साहित्यविभागः
डॉ.गङ्गानाथझापरिसरः, राष्ट्रियसंस्कृतसंस्थानम्

आधुनिकसंस्कृतकविलोके स्वकीयया प्रसादपेशलया भाषाशैल्या घनमधुरगभीरध्वनिसम्पत्त्या च विशिष्टां प्रतिष्ठां लब्धवतश्शुक्लप्रच्छदनिचोल-धौतवस्त्रोद्भासितस्य **डॉ. रमाकान्तशुक्लस्य** नाम कः संस्कृतप्रेमी विश्वबन्धुः सहृदयो न जानाति। काव्यनाट्यमाध्यमेन सुरगवीभाण्डागारमनुदिनं वर्धयन्नयं कविर्निखिलमपि विश्वं संस्कृतमयं विधातुं मञ्चे मञ्चे संस्कृतकविताः श्रावयन् मोमुदीति मोदयति च सुतरां मनांसि भावुकानां भावकानां जगतः। एतस्य कवेः समग्रं व्यक्तित्वं कर्तृत्वञ्चाभिलक्ष्य मया विलिखित एको विस्तृतो लेखः १९९३तमे ईशवीये वर्षे देववाणीसुवासस्य द्वितीयखण्डे १-२० पृष्ठेषु प्रकाशितः। तत्र कवेर्नाट्यं काव्यम् उभयमप्युद्दिश्य विशदा समीक्षा कृता वर्तते। इदानीमस्य कवेः काव्यवैशिष्ट्यं प्रति किञ्चिदुच्यते।

अद्यावधि डॉ. शुक्लस्य **'भाति मे भारतम्' 'जय भारत भूमे!' 'भारत जनताहं'मिति** काव्यत्रयं प्रकाशितम्। इदं काव्यत्रयं सर्वशुक्लेत्याख्ये कवेरेकस्मिन्नेव काव्यसङ्ग्रहे अवलोकयिष्यते शीघ्रम्, सम्प्रति तु तत्काव्यं मुद्रणाधीनम्। भाति मे भारतमिति काव्ये तत्राष्टोत्तरशतं पद्यजातं सङ्गृहीतम्। १९९०-१९९२ वर्षेषु दूरदर्शनेन प्रसारितेषु विंशतिभागेषु कविना मूलग्रन्थाद् अप्यतिरिक्तानि कानिचन पद्यानि संयोजितानि। यान्येतत्संस्करणेषु कुत्रचित् परिशिष्टरूपेण सङ्कलितानि सन्ति। कानिचन पद्यानि तु ईदृग्विधान्यपि सन्ति काव्यस्यैतस्य यान्यद्यावध्यप्यप्रकाशितानि सन्ति। भाति मे भारतमिति काव्यं कवेः काव्यमालाऽत एवाष्टाधिकशतमेव पद्यजातमत्र कविनाऽधिगृहीतम्।

काव्यमिदं सम्प्रति नवमकक्षायाः आरभ्य परास्नातककक्षापर्यन्तं पाठ्यते। मध्यप्रदेशप्रान्तस्य इण्टरमीडिएट-परीक्षापाठ्यक्रमे संस्कृतचन्द्रिकापुस्तके काव्यमिदं प्रथमपाठरूपे पठ्यते। सी.बी.एस.ई.परीक्षापाठ्यक्रमे नवमकक्षायां मणिकानामग्रन्थे पठ्यते। रुहेलखण्डविश्वविद्यालयस्य स्नातककक्षायामप्यस्य अध्ययनं भवति। कानपुरविश्वविद्यालयस्यापि स्नातककक्षायां छात्राः काव्यमिदं पठन्ति। जगन्नाथसंस्कृतविश्वविद्यालयस्य शास्त्रिपरीक्षायामप्येतस्य पञ्चाशत् श्लोकाः निर्धारिताः। आगरास्थ-दयालबागसंस्थानस्य, ग्वालियरस्थ- जीवाजी-विश्वविद्यालयस्य तथा च पटियालास्थित-पञ्जाब-विश्वविद्यालयस्य परास्नातककक्षासु काव्यमिदं सगौरवमध्याप्यते। कुमायूँ विश्वविद्यालय-देवीअहिल्या- विश्वविद्यालय-गुरुकुलकाङ्गडीविश्वविद्यालयेष्वपि काव्यमिदं पाठ्यग्रन्थरूपेण कदाचित् स्वीकृतमासीत्। इदं ग्रन्थरत्नं समुद्दिश्य नैके शोधार्थिनः 'डॉक्टरेट' इत्युपाधिं गृहीतवन्तः केचिच्च सोत्साहं चेष्टन्ते। स्वतन्त्ररूपेणापि ग्रन्थमिमं पा़ठं पाठं शोधपत्राणि विलिख्यन्ते। साम्प्रतमेतस्य काव्यस्य सप्तमसंस्करणं प्रकाश्यते। अनेनैतस्य लोकप्रियत्वं स्वयमेव सिद्ध्यति। अस्य रचयितारः डॉ. शुक्लमहोदयाः यस्मिन्नपि राष्ट्रियेऽन्ताराष्ट्रिये मञ्चे काव्यस्यैतस्य पाठं कुर्वन्ति, सर्वेऽपि श्रोतारस्तदा तमनुकुर्वन्ति, तेन साकं गायन्ति, समग्रोऽपि संस्कृतकविसम्मेलनपरिसरः 'भाति मे भारतम्' हृदयेन स्वीकुर्वन् परितोषमनुभवति। मया तु वारं वारं दृश्यमिदमवलोकितं स्वयमपि च भाति मे भारतं गीतम्। वाशिंगटनस्था **लाइब्रेरी-ऑफ-काङ्ग्रेस** इति नाम्नी संस्था स्वद्विशताब्दसमारोहावसरे ध्वन्यङ्किता विविधभाषाकविता अन्तर्जाले प्राक्षिपत्। तत्र डॉ. शुक्लस्यैकघण्टात्मकं काव्यमन्तर्भूतम्। तत्र सम्पूर्णमपि भाति मे भारतं द्रष्टुं श्रोतुञ्च शक्यते। एतत्कृते www.loc.gov/acu/ovop/delhi/salrp/shukla/ इत्यस्य वेबसाइटस्य दर्शनं कार्यम्। 'जय भारतभूमे!' इति काव्ये जयभारतभूमे, मम भारतं विजयते, भारतभूमिर्विलसति, भारताख्यः स्वदेशः, दिव्यं मम भारतम्, जय भारतमेदिनि विश्वनुते इति शीर्षकेषु रचना उपन्यस्ताः। भारतजनताऽहमिति काव्ये वाणीं वयं वन्दामहे, सुरभारती विजयते, वेदवाणीं नुमः, धन्वन्तरिं तमीडे, महाकालमालिका, नमः शास्त्रिणे वीरधुर्याय

तस्मै, उज्जयिनीयं जयति, राजस्थानम्, अहं स्वतन्त्रता भणामि, रौति ते भारतम्, राष्ट्रदेवते, भारतजनताऽहम्, फिलाडेल्फिया, मेघप्रबोधनम्, अकालजलद, स्वागतं पयोद ते, नेहरुं तं स्मरामो वयं सादरम्, जाबालिपुरं चल, एकं सद् बहुधा विलोक्यते भारतम्, उत्तरमङ्गलम्, वदत नेतारो मनाक्, किं जीवनं ते, ब्रूहि जगन्नाथ स्वामिन्, वन्दनीयास्ते, मदीयकविते कुरुष्व गानम्, वन्द्यतां काऽपि सा शासनासन्दिका, तं सुभाषं स्मरामो वयं सादरम्, तस्य स्मृतिर्विजयते पुरुषोत्तमस्य, स्वतन्त्रतायाः स्वर्णजयन्ती, लोकतन्त्रेऽस्मिन्, भारतस्य विजयोऽयम्, प्रणम्याः कारगिलवीराः, योऽयं कृतः शपथस्त्वया, भावसन्धिः, त्वं चन्दनमसि हे प्रभो!, तुरीनोस्मृतिसपादशतकम्, महाकुम्भे, मित्रतां कामये शात्रवञ्चाश्रये, आतङ्कवादस्य घोरताण्डवः, भारतस्य जनता समीक्षते इति चत्वारिंशच्छीर्षकेषु रचनाः सङ्कलिताः सन्ति। पारम्परिकच्छन्दांसि स्वतन्त्रच्छन्दांसि चात्र कविरसभाव- वाहकानि सन्ति।

इदं समग्रमपि रमाकान्तशुक्लकाव्यलोकं सुष्ठु समवलोक्येदं विशेषणं वक्तुं शक्यते यदेतेषां काव्यपरिधिर्बाह्यतः आभ्यन्तरतः सर्वतश्च राष्ट्रिया। कुत्रचिद् वैश्विकी लौकिक्यपि लोकोत्तराऽपि। वास्तविकमिदमस्माकं भारतराष्ट्रमत्र प्रतिबिम्बितं सुखदुःखयोः शान्तिकोलाहलयोर्नैसर्गिके मञ्चेऽधिष्ठितं प्रतिपलमिति यथा- पारतन्त्र्यदुःखमनेन सोढं स्वातन्त्र्यसुखञ्चावाप्तम्, स्वातन्त्र्यसुखमवाप्तं किन्तु गात्रभङ्गकष्टमनुभूतम्। देहदारणव्यथया सार्धं जनानां परिवारोच्छेदो दृष्टः। अग्निदाहाः दृष्टाः, दृष्टश्च विविधक्षेत्रेषु विनाशो विकाशश्च, पुनश्च प्रतीक्षिता लब्धेऽपि स्वराज्ये सुराजस्यागमनवेला। दृष्टा देशे देशस्य कृते सर्वस्वत्यागिनो जननायकाः, दृष्टाश्च शासनासन्दिकारूढानां विश्रुताः भ्रष्टाचारपरम्पराः। न केवलमिदमेतेषां कवितासंसारे दृष्टा वैज्ञानिकी उन्नतिः, दृष्टञ्च देशात् प्रतिभानां पलायनम्, दृष्टञ्चासूचेर्वायुयानोपग्रहपर्यन्तयन्त्राणां निर्माणक्षमत्वम्, दृष्टञ्च दोषपूर्णसामग्र्या निर्मितानां सेतूनां धराशायित्वम्, दृष्टं स्वतन्त्रतावाप्त्यै सम्पूर्णभारतीयानां पर्युत्सुकत्वं कष्टसहिष्णुत्वम्, दृष्टञ्च राजनीतिकदलानां परस्परवैरुध्यम्, स्वेच्छाचारिता च, दृष्टं स्वभाषाप्रेम, दृष्टश्च स्वभाषानिरादरः, दृष्टं संस्कृतसंस्कृत्योः स्तुतिगानम्, दृष्टञ्चोभयोरपि

बहुधा प्रत्याख्यानम्, दृष्टा दावानलवातिभूकम्पवात्याचक्रभीषणशोषादिका आपदो, दृष्टाश्च तत्सहनोपायाः, दृष्टं प्रभूतोत्पादनं, दृष्टा च प्राणापहारिणी क्षुधा, दृष्टा विद्यालयानां विश्वविद्यालयानां संस्थानानाञ्च ततयः, दृष्टाश्च शून्याः कक्षाः, दृष्टानि नवनूतनानि रेलयानानि, दृष्टश्च अलब्धासनानां यात्रिणां महासम्मर्दः, दृष्टाः क्रान्तिकारिणः, दृष्टाश्च देशघातकाः, दृष्टाः विवेकानन्द-गान्धि-तिलक-पटेल-सुभाष-टेगोर-नेहरू-शास्त्रि-किदवई-प्रभृतयो जननायकाः, दृष्टाश्च अतर्क्यकर्माणः अवाच्यनामानः अपशकुनसदृशाः नेतारः, दृष्टानि युद्धानि, दृष्टश्च विजयः, किं बहुना मधुरान्मधुरं, कटुकात्कटुकं सरसात्सरसं विषमाद्विषमं, किं किं न दृष्टं, श्रुतमनुभूतं वा विद्वद्भिः समीक्षकैः सर्वथा लोकराष्ट्रसमाजचिन्तनसापेक्षस्य डॉ.रमाकान्तशुक्लस्य काव्यवाङ्मये। देशस्य स्वातन्त्र्यगाथा, राष्ट्रनायकानां समाजोद्धारकाणां क्रान्तिकारिणां हुतात्मनां समरविजयिनां राष्ट्रार्पितजीवनानाञ्च वीरसैनिकानां विदुषां यत्र चरितरागाः वर्णिताः तथा च भारतभुवोऽपूर्वा शोभा गौरवं दृश्यं श्रव्यं च रामणीयकं भारतजनताया साहस-जिजीविषा-कर्मठता-सहिष्णुताप्रभृतयो विशेषा गुणा निरूपितास्तत्रैव सत्यदर्शिना कविना राष्ट्रदुर्दशायाः स्वाभाविकी प्रतीतिरपि कारिता। सत्यतः डॉ.शुक्लमहोदयानां काव्ये सायासमनायासं वाऽभिव्यक्तिङ्गतानां विविधविषयाणां सम्यक् पर्यालोचनया तत्काव्यवैशिष्ट्यं भजमानेयं प्रवृत्तिचतुष्टयी समुदेति। यस्यां राष्ट्रेक्षण-लोकावलोकन-प्रकृतिपर्यवेक्षण- जीवनदर्शनानि च विशेषेण गण्यन्ते। इयं चतुष्टयी कवेस्त्रिष्वपि काव्येषु न्यूनाधिकमात्रायां प्रायशः उपलभ्यते। राष्ट्रेक्षणे कविः क्वचिद् राष्ट्रोन्नत्या हर्षमनुभवति तथा च तदुद्घोषं विश्वमञ्चे करोति। भाखडाप्रभृतीन् बन्धान् विदधद्[१] विद्युत्तैलेन्धनलौहयन्त्राणां निर्माणं कुर्वत्[२] स्वरक्षायै ऊर्जस्वलमग्निं[३] विविधानन्यांश्च युद्धपोतान् विरचयदिदं भारतं मे विश्वेऽभिभासते। भारतजनता-कवितायामपि भारतजनतायाः प्रातिनिध्यं कुर्वन् कविर्देशस्य वैज्ञानिकीं भौतिकीञ्च प्रगतिं विलोक्य मोमुदीति किन्तु शठचरितान्यवलोक्य दुःखमप्यनुभवति।[४] यतो हि विश्वबन्धुता विश्ववन्द्य- चरित्रैर्जगत्पावनी-करणक्षमता विश्वं प्रत्येककुटुम्बभावना भारतवर्षस्य परिचयः[५]। अहं स्वतन्त्रता भणामीति कवितायां तु स्वयं स्वतन्त्रतामुखेन कविर्जलाऽप्राप्तिं क्रियाहानिं

भेदभावनाप्रवर्तनं प्रति चिन्तयितुं मानवान् विवशीकरोति[६]। दलगतराजनीतिं प्रतिक्षणं प्रवञ्चनां प्रतारणं विहिंसनमौषधेषु विमिश्रणं लभमाना स्वतन्त्रताऽमलतायै पावनतायै च लोकं निवेदयति।[७] भाति मे भारतमिति सर्वदा गायन्तं कविं स्वयमेव तस्यात्मा पृच्छति यद् अनेकैरभावैर्युतं ते भारतं सम्प्रति विलपति किन्तु कथं त्वं सर्वदा भाति मे भारतमिति गायसि।[८] राष्ट्रस्य दुर्दशामवलोक्य कवेरयं क्षोभः तस्य राष्ट्रप्रीतिं सुष्ठु प्रमाणयति। स सदुःखं चिन्तयति यद् यत्राहिंसायाः स्थानं तत्र हिंसा प्रचलति, यत्र सहिष्णुताकथा तत्रासहिष्णुता प्रभवति, गृहशान्तिघोषस्थाने गृहयुद्धघोषः प्रसरति, किं भारतभूमेरियं दशा कदाचिदपि वन्दनीया? न कदापि वन्दनीयेयं सर्वथा गर्हणीया।[९] पितुर्वैभवमिव राष्ट्रियं धनं स्वीयं मत्वा तदुदरस्थीकृत्य चिन्तारहितः सन् यो जीवति, कविदृशा तं भारतस्य जनता समीक्षत एव।[१०] भारतजनताया जागरूकतां प्रति कवेः कश्चिदाग्रहोऽत्र विशेषेण श्लाघनीयः। भारतजनता तं न कदाऽपि मर्षयिष्यति। तेन वीतचिन्तेन सावधानेन भाव्यमित्यत्रोद्घोषः। राष्ट्रदुर्दशाकारिभ्यो जनेभ्यो रचनाकारस्यायमधिक्षेपस्तं राष्ट्रकवेः श्रेण्यां निसर्गतः समानयति।

डॉ. शुक्लस्य लोकावलोकमपि राष्ट्रस्यैव विविधभङ्गिम्नामवलोकनम् इति प्रतीयते। भारतस्य चित्तं लोकगीतेषु लोकनृत्येषु लोककृत्येष्वेवाहर्निशं रतं वर्तते।[११]अत्र वेषभूषासु, अशनोपासनापद्धतिषु, क्रीडनामोदसंस्कारनृत्यादिषु सत्यपि भिन्नत्वेऽभिन्नत्वमेवाभिभासते।[१२]।

कवेः प्रकृतिपर्यवेक्षणेऽपि यादृशीं शोभां भारतभूमिर्बिभर्ति न तादृशीं कस्यचिदप्यन्यस्य राष्ट्रभूमिः। कुत्र वर्तन्ते जगति ईदृशा उपवनवनभागाः[१३]। भारतं विभासयन्ति श्यामलवृक्षाणां शोभासमृद्धयः पद्मनेत्रमयानि सरांसि, तथा च श्वेतफेनानि निर्झराणि।[१४]

जीवनदर्शनस्थापनप्रसङ्गे तु कविः स्वकीयायां 'स्वागतं पयोद ते' इति कवितायां द्वन्द्वं जीवनं मन्यमानो जीवनस्य गभीरां रहस्यविच्छित्तिं प्रतिपादयति किन्तु कविदृशा तस्यैव जीवनस्य जीवनत्वं यो जन्मभूम्यां जनन्यामिव श्रद्दधाति।[१५] कवेः काव्यसंसारे सर्वेषां कृते कल्याणमयी मङ्गलकामना नरीनृत्यते। कविः कस्यचनापि शोषणं व्याधिपीडनं दीनतां हीनतां च नेच्छति।[१६] सर्वेऽपि स्वतन्त्राः प्रसन्नाश्च भवन्तु[१७]। आतङ्कवादस्योच्छेदनं भवतु, सज्जनानां

रक्षा सम्भवतु, दुष्टानाञ्च विनाशः आविर्भवतु। सुखशान्तिमयं सुदृढरक्षामयं यशोमयं समृद्धिमयञ्च भारतराष्ट्रं भवतु, इयमेवेच्छा भारतजनतायाः।१९ भारतजनतायाः प्राणे प्राणे निवसतस्तत्प्रतिनिधेः कवेरपीयमेव समीहा। विश्वशिवार्थं विश्वस्वातन्त्र्यार्थं पवित्रस्य भावनालोकस्य विकासो विश्वक्षितिजे भूयादिति कविर्हृदयेन कामयते।

एभिः सर्वैरपि प्रतिपादनैः डॉ.रमाकान्तशुक्लस्य काव्यवैशिष्ट्यं प्रति वयमिदं वक्तुं शक्नुमो यत्कविरयं वस्तुतः राष्ट्रसंस्पन्दनानामेव गतानां वैश्विकघटनानां द्रष्टाऽत एव युगापेक्षिस्वरत्वमेतत्काव्यस्य प्रथमं वैशिष्ट्यम्। व्यङ्ग्यमाध्यमेन यदा कदाचिदैतिहासिकानां राजनीतिकघटनानां रहस्यमयीं परिणतिं किं वा निर्णयशून्यं पर्यवसानमपि कविः समलं समुद्घाटयति। किं कुर्यात् कवितायां पक्षद्वयमिदम् अवलोकनीयम्-

**महामात्योऽटलोऽध्यक्षो मुशर्रफ् चागरानगरे!**
**शिखरवार्तावसाने निष्फलौ! कः कोऽत्र किं कुर्यात्॥**
**मृतो वा जीवितो वापेक्ष्यते न्यायाय लादेनः।**
**प्रतिज्ञायापि नो लभते बुशस्तं चेत्स किं कुर्यात्॥**

इदं संयमितव्यङ्ग्यप्रयोगसामरस्यमेतस्यापरं वैशिष्ट्यम्। अन्यान्यपि यानि वर्तन्ते वैशिष्ट्यानि तेषु काव्यस्य प्रसादपेशलता, अनुप्रासश्लेषरूपकादीनाम् अलङ्काराणां विशदता, सहजोक्त्यलङ्कारस्य स्फुटमयता, वर्णनबहुलतायामपि प्रवाहतत्परता अवलोकनीयाः। झटिति भावानुगम एतेषां काव्यस्य कश्चन विशिष्ट एव पक्षः। राष्ट्रानुराग एतदात्मा जीवनरसस्य शाश्वत्यां पयस्विन्यां कवेर्विश्वासोऽत एव काव्ये तत्प्रवाहः। इमानेव भावविशेषान् धारयता डॉ. रमाकान्तशुक्लकाव्यस्य रत्नभूतेनानेन पद्येन सह विरमामीति-

**सङ्गणकयन्त्रजालोऽपि मेऽस्तु**
**भौतिक्युन्नतिरपि मे तथाऽस्तु!**
**जीवनरसश्च मा शुष्कोऽभूत्**
**इतिकामा भारतजनताऽहम्॥**

सन्दर्भाः

१. भाखण्डाबन्ध-दामोदरीयोजना-
बाणगङ्गा-फरक्कादिसिक्तोर्जितम्।
ब्रह्मपुत्रादिसन्दर्शिताम्बुच्छटं
भूतले भाति मेऽनारतं भारतम्।।
(भाति मे भारतम् ११)

२. विद्युदुत्पादने तैलसंशोधने
इन्धनान्वेषणे लौहनिष्पादने।
यन्त्रनिर्माणकार्ये समर्थं च सद्
भूतले भाति मेऽनारतं भारतम्।।
(भाति मे भारतम् १२)

३. अग्निमूर्जस्वलं स्वत्वरक्षाकृते
साधनैरात्मनीनैः सुसंसाधयत्।
युद्धपोताँश्च सिन्धूरसि स्थापयद्
भूतले भाति मेऽनारतं भारतम्।।
(भाति मे भारतम् १५)

४.मोदे प्रगतिं दर्शं दर्शं
वैज्ञानिकीं च भौतिकीं परम्
दूयेऽद्यत्वे लोकं लोकं
शठचरितं भारतजनताऽहम्।।
भारत जनताऽहम् ३२)

५. विश्वबन्धुत्वमुद्घोषयत्पावनं
विश्ववन्द्यैश्चरित्रैर्जगत्पावयद्।
विश्वमेकं कुटुम्बं समालोकयद्
भूतले भाति मेऽनारतं भारतम्।।
(भाति मे भारतम् १)

६. जलं न लभ्यते तथा यथा सुराः पदे पदे
वचांसि सन्ति भूरिशो न हि क्रियाः पदे पदे
पुनश्च भेदभावना प्रवर्त्यते पदे पदे
इयं दशा समर्थनं किमर्हतीति चिन्त्यताम्।।
(अहं स्वतन्त्रता भणामि ९)

७. दलाद्दले पलायनं प्रवञ्चनं क्षणे क्षणे
प्रतारणं जने जने विहिंसनं पणे पणे।
विलोक्य रोगदायकं विमिश्रणं कणे कणे
गतास्मि या शुचं हि सा द्रुतं द्रुतं विलोप्यताम्।।

(अहं स्वतन्त्रता भणामि १०)

८.किं रमाकान्त नित्यं त्वया भण्यते
भाति मे भारतं भाति मे भारतम्।
किं न पश्यस्यनेकैरभावैर्युतं
रौति ते भारतं रौति ते भारतम्।।

(रौति ते भारतम् १)

९. अहिंसा चत्वरे हिंसा सहिष्णुत्वाजिरे कलहः।
क्वचिद् गृहयुद्धघोषः किं दशेयं वन्दनीयास्ते।।

(वन्दनीयास्ते १३)

१०. पित्र्यरिक्थमिव राष्ट्रियं धनं वीतचिन्त उदरे करोति कः।
श्रव्यदृश्यप्रमाणकैः भारस्तय जनता समीक्षते।

भारतजनताऽहम् (पृ. १६७)

११. लोकगीतेषु चित्तं यदीयं रतं
लोकनृत्येषु चित्तं यदीयं रतम्।
लोककृत्येषु चित्तं यदीयं रतं
भूतले भाति तन्मामकं भारतम्।।

(भाति मे भारतम् ८१)

१२. वेशभूषाशनोपासनापद्धति-
क्रीडनामोद-संस्कार-वृत्त्यादिषु।
यद्धि भिन्नं सदप्यस्त्यभिन्नं सदा
भूतले भाति तन्मामकं भारतम्।।

(भाति मे भारतम् ५)

१३. क्वचिदपि हरिणाली सञ्चरन्ती चकास्ति
क्वचिदपि च गजानां यत्र यूथं प्रसन्नम्।
क्वचिदपि दृढनादो यत्र कण्ठीरवाणाम्
उपवनवनभागा ईदृशाः कुत्र सन्ति।।

(जय भारतभूमे ११)

१४. श्यामलानोकहश्रीसमृद्धान्तरं
पद्मनेत्रैस्सरोभिस्समालोकितम्।
निर्झरैः श्वेतफैनैस्समृद्धाञ्चलं
भूतले भाति मेऽनारतं भारतम्।।

(भाति मे भारतम् ४३)

१५. न माता जन्मभूर्बन्धो! मता चेत्!
किमेतेनायुषा किं जीवनं ते।।

(भारतजनताऽहम्)

१६. शोषितो नात्र कश्चिद्भवेत्केनचिद्
व्याधिना पीडितो नो भवेत्कश्चन।
नात्र कोऽपि व्रजेद्दीनतां हीनतां
मोदतां मे सदा पावनं भारतम्।।

(भाति मे भारतम् १०८)

१७. परतन्त्रो माऽभूत् क्वापि कोऽपि सर्वः सर्वत्र सदा नन्दतु।
जगतः स्वतन्त्रतामिच्छन्ती मोदे खलु भारतजनताऽहम्।।

(भारतजनताऽहम्)

१८. आतङ्कवादः उच्छिन्नो जायतां जगतीतलात्।
परित्राताः साधवः स्युर्दुष्कृतश्च विनाशिताः।।

(भारतजनताऽऽहम् )

●

# रम्यं राष्ट्रकवेः काव्यम्

**डॉ. रामविनयसिंहः**
एसोसिएट प्रोफेसर, संस्कृत विभाग,
डी०ए०वी० (पी०जी०) कॉलेज, देहरादून

भारतराष्ट्रस्य सनातनपरम्परायाः संरक्षणे संवर्द्धने च संस्कृत-वाङ्मयस्यावदानं विश्वविश्रुतमेव। सर्वथानवद्यगद्यपद्यविधासु सार्वजनीनं प्रथनमाकैलासात्समुद्रपर्यन्तं सचेतसां चेतांसि हिन्दोलयतीति निश्चप्रचम्। गीर्वाणवाण्यामस्यां धर्म-संस्कृति-जाति-लोकपरम्परा-राष्ट्रचेतनाप्रभृतीनि बहूनि तत्त्वानि निहितानि समवलोक्यन्ते। अत्र क्वचिद्रामणीयकं निसर्गस्य चेतो हरति क्वचिच्च चिरन्तनचिन्तनसमुत्कर्षः हर्षमुत्तोलयति, क्वचिन्मातृभूमेर्वन्दनं हृद्यममन्दानन्दसन्दोहं पुष्णाति क्वचिच्च मानवानां वैश्विकं परोपकारित्वं भारतस्य विश्वगौरवमगूरयति। 'वयं राष्ट्रे जागृयाम पुरोहिताः', 'आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्', 'अभिवर्धतां पयसाभिराष्ट्रेण वर्धताम्', 'ब्रह्मचर्येण तपसा राष्ट्रं विरक्षती'त्येतेषु मन्त्रेषु या राष्ट्रिया भाववैविधी राष्ट्रचिन्तकानां मनस्सु भारतराष्ट्रं प्रति श्रद्धाततीः जनयति सैव भाववैविधी साम्प्रतमप्यर्वाचीनकाव्यधारायां प्रवहन्ती 'भाति मे भारतं भाति मे भारतम्' इति प्रोच्चारयन्ती प्रोच्छलन्ती समेषां हृदि सर्वथैव प्रत्यग्रां राष्ट्रियां विच्छत्तिं विमृशति। अर्वाचीने युगे संस्कृतकविसरणावग्रेसराः महान्तः राष्ट्रकवयः डॉ. रमाकान्तशुक्लमहाभागाः सन्ति न केषां विद्यावतां सहृदयानां हृदयालङ्कारभूताः? एतेषां कविधौरेयाणां राष्ट्रसपर्यापर्यायभूताः काव्यग्रन्थाः समग्रे विश्वे विलक्षणमेव भावोद्वेगं लक्षयन्ति। भाति मे भारतमित्याख्यं काव्यं राष्ट्रस्य सर्वविधं चित्रं समुपस्थापयति। काव्यमेतत् कविवरेण्यानामोजोभावनानां परिपाकं प्रथयति। वसुधैव कुटुम्बकमिति वचनमनुपालयत् कथमस्माकं भारतं वैश्विकं वैशिष्ट्यं पुष्णातीति सम्यगभिव्यज्यते कविवरैः:-

**विश्वबन्धुत्वमुद्घोषयत्पावनं ,**
**विश्ववन्द्यैश्चरित्रैर्जगत्पावयद्।**
**विश्वमेकं कुटुम्बं समालोकयद्**
**भूतले भाति मेऽनारतं भारतम्॥**
**क्रुद्धहिंसाबले क्वास्त्यहिंसाजयः**
**कुत्र मुच्येत बद्धश्च मामन्तरा।**
**प्रश्नमित्थं जगत्सम्मुखे स्थापयत्**
**भूतले भाति मेऽनारतं भारतम्॥**

राष्ट्रवासिनां परिधान-धर्म-क्रीडाहाररीत्यादिवैविध्येऽपि आन्तरिकमैक्यं कथमत्रास्तीति प्रख्यन् कौति कविरेवम्-

**वेशभूषाशनोपासनापद्धति -**
**क्रीडनामोदसंस्कारवृत्त्यादिषु।**
**यद्धि भिन्नं सदप्यस्त्यभिन्नं सदा**
**भूतले भाति तन्मामकं भारतम्॥**

अनेकतायामेकतायाः यानि कानि च चित्राणि भवितुं शक्यन्ते तानि सर्वाण्येव राष्ट्रकविभिश्शुक्लमहाभागैः प्रस्तुतानि सन्त्यत्र राष्ट्रियकाव्ये। क्वचिद्देवदानवयोर्विरोधः क्वचित्साहित्यदर्शनयोस्सम्मेलनं क्वचिद् वैज्ञानिकानुसन्धानविधानस्योपयोगित्वमनुपयोगित्वं वा सर्वत्र सहृदयानां हृदयेषु भारतराष्ट्रस्यैकत्र एव गौरवं ख्यापयति।

विकासवर्त्मनि प्रसरणशीले देशे क्वचिद्रेल-यानेष्वपि चरैवेति चरैवेतीत्युपदेशस्य पालनं भवति लोकसेवादृशा न महदैश्वर्यप्रदर्शनाय। किन्तु राम-कृष्ण-बुद्धादिदेवकल्पैः युगदर्शिभिः महामानवैः सम्पोषिते, वाल्मीकिव्यासकालिदाससूरतुलसीकबीरादिमहाकवीनां काव्यप्रभाभिः संद्योतिते चास्मद्देशे चेत् कश्चन बालकः वस्त्रहीनः सन् यानेषु भिक्षारतः दृश्यते तदा कविहृदये भवति वेदनाविगलितपरिदेवनाविस्फोटः, स्फुरति लेखनी सहसैव साश्रुभावनया, रौति भारतं तददर्शनीयं दृश्यं दर्शं दर्शम्-

**रेलयानेषु भिक्षापरान् बालकान्।**
**अङ्गहीनानवस्त्रान् दयोत्पादकान्।**
**गालिभिः पोषितान् न्यक्कृतैस्तोषितान्।**
**वीक्ष्य चिन्तामयं रौति ते भारतम्॥**

भारतजनताहमित्याख्ये काव्ये कवितल्लजैः डॉ. रमाकान्त-शुक्लमहाभागैः विरोधाभासाभिव्यञ्जनया भारतजनतामुखेनैव राष्ट्रस्य दशा प्रदर्शिता संदृश्यते यत्र भारतवर्षवास्तव्यानां सहजा प्रवृत्तिः सांस्कृतिकमूल्यं निष्कामकर्मत्वं श्रमशीलत्वं भ्रमरहितत्वञ्च राष्ट्रवैभवं लक्षयन्ति-

**अभिमानधना विनयोपेता शालीना भारतजनताहम्।**
**कुलिशादपि कठिना कुसुमादपि सुकुमारा भारतजनताहम्॥**
**नाहं भ्रमेऽस्मि नाहं मोहे विश्वं भ्रान्त्वा तथ्यं वदामि**
**प्रेरणां जनान्मत्तो लभते धृतिशीला भारतजनताहम्॥**

जङ्गले मङ्गलं कर्तुं सक्षमे सर्वसहे देशे विषपानपरापि स्मितवदना भारतजनता उच्चावचमार्गेऽपि सोत्साहा गच्छतीति कापि विलक्षणैव भाववृत्तिः। कविवरेण्यानां राष्ट्रार्चकानां भारतवन्दना न केवलं प्राक्तनीयं वैभवं व्यनक्ति देशस्य प्रत्युत साम्प्रतिकमपि दयनीयत्वं निभालयति वैशिष्ट्यञ्च सम्पोषयति। यथा पद्ये तथैव गद्येऽप्येतेषां राष्ट्रचिन्तनं मनो मथ्नाति। भवतु रामलक्ष्मणव्याजेन पण्डितराजव्याजेन वा कविभिः सर्वत्र व्यञ्जनया राष्ट्रे व्यापष्टताऽभेदभावनायाः यौगीनमभिव्यञ्जनं कृतमवलोक्यते।

निष्कर्षत्वेन वक्तुमीहे यद् वर्तमानसन्दर्भे राष्ट्रियभावनायाः काव्यसंस्कारे डॉ. रमाकान्तशुक्लाभिधेयो महाकविरेवान्यतमो नात्र काऽपि विप्रतिपत्तिः। यद्यपि बहुभिः कविभिः राष्ट्राराधनार्थं काव्यानि व्यरचिषत तथापि डॉ. शुक्लमहाभागैः सरलसरलया तरलतरलया भाषया या रचना कृता सा प्रत्यग्रा जनानां हृदयग्राह्या च। अतो वच्मि-

**यस्य काव्यं मुदा राष्ट्रभावान्वितं सर्वदा सज्जनैरत्र पेपीयते।**
**श्रद्धया तद्धि सत्त्वं निपीयाधुना नौमि शुक्लच्छविं सत्कविं सादरम्॥**

●

# राष्ट्रियतायाः प्रतिमूर्त्तिः पद्मश्रीः श्रीरमाकान्तशुक्लः

डॉ. पूर्णचन्द्र उपाध्यायः
संस्कृतविभागाध्यक्षः
राजकीयमहाविद्यालय, बून्दी (राज.)

महामोहान्धकारेऽस्मिन्नतिविचित्रपरम्परावाहिनि भूतले नैकविधयोनित्वमाश्रयमाणाश्चेतनधर्माणः सृष्टे आवहमानकालादेव जायन्ते, क्षीयन्ते, वर्धन्ते, विनश्यन्ति च मर्त्यधर्माणः सन्त इति विश्वजनीनं सत्यं तत्तद्युगजन्मनां दिव्यात्मनामभ्युक्तिप्रामाण्यात्। तथा हि तथ्यमिदं प्रामाण्यते दृढतया 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च'[1] इति श्रीमद्भगवद्गीतायां प्रतिपादितयोगेष्वरश्रीकृष्णवचनादेव। परन्तु न तेषां समेषां जीवानां धरावतरणेन पञ्चमहाभूतात्मकशरीरधारणेन वा जनिसार्थकत्वं स्थूलशरीरस्य नश्वरत्वाद् क्षणभङ्गुरत्वाद् वेति। अतस्तत्र कर्त्तव्याकर्त्तव्यविवेकवन्मानवीयं जन्म एव सकलजैविकसत्तासु सर्वोत्कृष्टत्वं भजते, अपि च तत्र पुनः सकललोक-चैतन्योद्धारकः यशःकायधाारणलालसः त्रिभुवनविजयी कविरेवालौकिकप्रतिभावान् त्रैकालिकसत्तावान् इति न काऽपि संशीतिः । उद्धृतं चात्र विश्वनाथकविराजेन अग्निपुराणात्-

**'नरत्वं दुर्लभं लोके कविस्तत्र सुदुर्लभः।**
**कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा।।**[2]

किञ्चार्वाचीनसुरभारतीसारस्वतसाधकेष्वनन्यप्रतिभावत्सु पद्मश्री-विभूषिताचार्यश्रीरमाकान्तशुक्लः भास्वरः ज्योतिष्मानिव कश्चन विद्वद्वरेण्यः यशस्वी आशुकविरिति तत्तत्समसामयिकसहृदयभाजामैक्यमतमेव। सहजकविनाऽनेनाभिनवेन राष्ट्रप्रेमपीयूषसंसिक्तेन नैकानि राष्ट्रगौरवख्यापकानि मुक्तकविधासंवलितानि काव्यानि विरचितानि। 'भाति मे भारतम्' इति तदीयं काव्यं तदन्यतमम् अतीव गौरवास्पदम्।

किञ्च राष्ट्रमिति पदाद् घ-प्रत्यये तत्र पुनः इयादेशे राष्ट्रियमिति पदम्, तस्मात् पुनः भावे तल् प्रत्यये टापि चेति व्याकरणदृष्ट्या 'राष्ट्रियता' इति पदस्य सिद्धिः।

केयं राष्ट्रियता किं चास्य स्वरूपं किं स्वरूपकं च राष्ट्रप्रेम इति विचिकित्सायामेवं वक्तुं शक्यते यद् राष्ट्रं प्रति समर्पणभावनया तत्सामाजिकार्थिकराजनीतिकसांस्कृतिकशैक्षिकभौगोलिकादीनामन्तस्तत्त्वानां स्वाभिमानपूर्वकं गौरवख्यापनं तत्संवेदनाशीलत्वं वा राष्ट्रियता इति संज्ञामाधत्ते। तदेतद्दृष्ट्या वयं सूक्ष्मेक्षिकया विवेचयामश्चेत् सम्यग् ज्ञायते यत् आचार्यरमाकान्तशुक्लप्रणीतानि काव्यानि राष्ट्रभावनया नितरामाप्लावितानि सन्ति।

तदत्र 'भाति मे भारतम्' इति यत्तदीयम् अष्टोत्तरैकशतात्मकं काव्यं यत्खलु भक्तिकोटिकं तत्तु तदीयामपूर्वां राष्ट्रियतां ख्यापयतितमाम्। तदस्मात् शीर्षकादेव सुस्पष्टं प्रतीयते यद् भारतस्य नामग्रहणपूर्वकमसौ आत्मानं सबहुमानं गौरवान्वितं मनुते, अपि च तदीया आत्मीयता काचिदनन्या शीर्षकेऽत्र आदर्शे इव प्रतिफलति 'मे' इति पदप्रयोगदार्ढ्यात्। 'भाति' इति पदप्रयोगेण तु समग्रे विश्वे एव भारतवर्षस्य महती प्रतिष्ठा शोभायमानेति द्योतते। कविवरस्यास्य सहृदयस्य हृदयोद्गारिकाऽभिव्यक्तिर्यत्, प्रत्येकं भारतीयस्य आत्मा एव भारतवर्षम्। तदिदं राष्ट्रं परित्यज्य न कोऽपि भारतीयः विशेषतया कविरसौ जीवितुं समर्थः । तदिदं तथ्यं स्पष्टमेव ज्ञायते काव्यस्यास्य समर्पणान्वितपद्यात्। यथा -

**भारतं वर्तते मे परं सम्बलं, भारतं नित्यमेव स्मरामि प्रियम्।**
**भारतेनास्ति मे जीवनं जीवनं, भारतायार्पितं मेऽखिलं चेष्टितम्॥**[3]

तदिदं राष्ट्रभक्तिपरकं काव्यं 'कीर्त्तितैषा चतूरेफिका स्रग्विणी'[4] इति लक्षणमनुगच्छता स्रग्विणीच्छन्दसा निबद्धं सद् गेयत्वं प्रगुणीकुरुते। प्रसादगुणोपेता काव्यललनेयमनुप्रासालंकारप्राचुर्येण सुगुम्फिता सती हरति सहृदयानां चेतः। काव्येऽस्मिन् प्रतिफलति कवेरस्य सचेतसः समग्रं जीवनदर्शनम्। भारतीयसंस्कतेः विशिष्टवैशिष्ट्येषु विश्ववन्दितेष्वन्यतमं यद् 'वसुधैव कुटुम्बकम्' इति उदात्तभावनात्मकं तत्त्वं, तत्तु काव्यस्यास्य आदर्शभूतं प्रथममर्घ्यम्। तदपि कविनाऽनेन उच्चैरुद्घोषणपूर्वकं गीयते-

विश्वबन्धुत्वमुद्घोषयत्पावनं ,
विश्ववन्द्यैश्चरित्रैर्जगत्पावयद् ।
विश्वमेकं कुटुम्बं समालोकयद्
भूतले भाति मेऽनारतं भारतम्॥[५]

भारतवर्षं नो समन्वयवादित्वेन[६] साम्यवादित्वेन[७] चोभयथा सत्साधयिततमां वैश्विकमानवताया अपूर्वत्वमिति वर्णयन्नसौ आत्मानं भारतवैभवमधिगम्य नाल्पं गौरवं मनुते।

अपिचावैदिकविविधदार्शनिकज्ञानविज्ञाननिर्भरमस्मद्राष्ट्रमिति[८] अलौकिकानन्दानुभूतिमसौ आधत्ते। यथेदं राष्ट्रमध्यात्मविद्यायाः चरमत्वमधिगच्छति, तथैव च भौतिकविज्ञानस्य चरमसीमानमधिकरोतीति नः भारतीयानां गौरवास्पदत्वम्, बहुदेववादित्वेन सह बहुधर्मावलम्बित्वेऽपि भारतवर्षस्यास्य अखण्डत्वमेव तदीयमुदात्तत्वं महनीयत्वं च स्वतः प्रस्फुटतः। पुरुषार्थचतुष्टयसमन्वितं मानवजीवनमेव वस्तुतः मानवत्वसाधकमिति यद् भारतीयसंस्कृतेः बीजभूतं तत्त्वं, तदप्युद्घोषयन्कविरसौ प्रसीदति, अपि च भक्तिज्ञानादिभिः नैकैः साधनात्मकैः मार्गैः समन्वितं नो भारतीयदर्शनं सर्वथा एकात्मवादत्वमेकेश्वरवादत्वं वाऽवलम्बते इति यदस्माकं वेदान्तप्रतिपाद्यं, तदपि किमप्यनितरविशिष्टत्वमाधत्ते इति तदभिमतम्। उक्तं च तेन-

**अर्थकामान्वितं धर्ममोक्षान्वितं**
**भक्तिभावान्वितं ज्ञानकर्मान्वितम्।**
**नैकमार्गैः प्रभुं चैकमाराधयद्।**
**भूतले भाति मेऽनारतं भारतम्॥[९]**

भारतवर्षमस्मदीयं नैकाभिः भाषाभिः, तद्भाषाभाषिभिस्तत्तद्-भाषाविरचितसाहित्यैः, अपि च व्यासवाल्मीकिकालिदासादिभिः प्राचीनैरर्वाचीनैश्च तच्छाश्वतचिन्तनप्रसृतैः कालजयिरचनाभिश्चात्यन्तं सुसमृद्धमिति गौरवास्पदत्वं नः इति कविवरस्यास्य आनन्दोद्गारिकाऽभिव्यक्तिः। राष्ट्रस्तुतिपरकेऽस्मिन्काव्ये निर्मले आदर्शे इव प्रतिफलति तदीया विविधज्ञानावगाहिनी विद्वन्मयी छविः। तथाह्यत्र अनुपमं भौगोलिकं ज्ञानं, विविधसांस्कृतिकज्ञानं, सामाजिकं, राजनीतिकम्, आर्थिकं ज्ञानं च यद्राष्ट्रियं तत्तु स्वाभिमानपूर्वकं लब्धसत्ताकमिति

तदीयराष्ट्रप्रेम्णः प्रामाण्यातिशयत्वं प्रकटयति । काव्येऽस्मिन् नारीचैतन्यं तदीयमपि तत्सामाजिकीं चेतनां व्यनक्ति। तदनुसारं कैकेयीलक्ष्मीबाईप्रभृतीनां वीराङ्गनानां दर्शितपराक्रमेण राष्ट्रं नो विश्वविश्रुतमेव। प्रेरणास्पदानामुदात्तचरितानां राम-कृष्ण-ध्रुव-प्रह्लाद-शिवि-दधीचि-हरिश्चन्द्र-भीष्मादीनां महतामग्रजन्मनां महनीयकथाभिः संश्लिष्टं नो राष्ट्रं पवित्रतममिति तन्मनः प्रसीदतितमाम्[१०]। तदीयं प्राकृतिकं पर्यावरणचैतन्यमपि[११] काव्येऽस्मिन् वैशद्येन परिलक्ष्यते। शान्ति-मैत्री-प्रगतीनां संसूचकं राष्ट्रियध्वजं प्रति तदीया स्वाभिमानिता अस्मिता वा अनन्या एव। ब्रूते चासौ सगर्वम् -

**यस्य दिल्लीस्थिते रक्तदुर्गे शुभे**
**संसदश्चोत्तमाङ्गे त्रिरङ्गध्वजः।**
**सार्वभौमीं स्वसत्तां वदत्युल्लसन्।**
**भूतले भाति तन्मामकं भारतम्।।**[१२]

तदेवं हीरकप्रभायुतपद्मश्रीविभूषिताचार्यश्रीरमाकान्तशुक्लप्रणीतं 'भाति मे भारतमि'ति राष्ट्रप्रेममन्दाकिनीप्लावितं भक्तिकाव्यमिदं लघुतममपि तदीयामनितरविशिष्टां तैकालिकीं राष्ट्रियतां प्रकटयितुं सर्वथाऽलमिति नातिविस्तरेण अलम्। इति शम्।

**सन्दर्भाः**

१. श्रीमद्भगगवद्गीता- २.२७
२. विश्वनाथकृतः साहित्यदर्पणः-१मः परिच्छेदः
३. भाति मे भारतम्- समर्पणं पृ.सं. २
४. छन्दोमञ्जरी- पृ.सं. ४९
५. भाति मे भारतम्- प.सं. १
६. भाति मे भारतम्- प.सं. ५
७. भाति मे भारतम्- प.सं. ४१-४६
८ भाति मे भारतम्- प.सं. ६-८
९. भाति मे भारतम्- प.सं. २२
१०. भाति मे भारतम् प.सं. ३९
११. भाति मे भारतम् प.सं. ४०-४४
१२. भाति मे भारतम् पं.सं. ६०

# राजधानीरचनाकाव्ये सूक्त्याभाणकप्रयोगः

**डॉ. नवलता**
के-६८०, आशियाना कॉलोनी,
कानपुर रोड, लखनऊ

काव्ये स्वभावोक्त्यपेक्षया वक्रोक्तेः चारुत्वाभिधायकत्वं वर्तततरामिति काव्यशास्त्रिणां दृष्टिः। सा च काव्ये लक्षणाव्यञ्जनादिवृत्तितया सर्वत्र सत्काव्यस्य हेतुरिति। यथोक्तं भामहेन सैषा सर्वत्र वक्रोक्तिरिति। 'कान्तासम्मिततयोपदेश'भूतं 'सद्यः परिनिर्वृतिकरं' च काव्यमुक्तिवैचित्र्येण सहृदयानां हृत्स्वाह्लादं जनयति। तच्च साधारणीकरणद्वारेण काव्यस्य पाठकैः श्रोतृभिर्वा चर्व्यते। अत्र तस्य शास्त्रविवेचनायाः नास्त्यपेक्षा, किन्तु साधारणीकरणस्य साधकभूतासु युक्तिषु सुभाषितसूक्तिलोकोक्त्यादिरूपेण लोकव्यवहारे रूढार्थेषु प्रयोज्यमानानि पदानि वाक्यानि चाभाणका इति वक्तुं शक्यते। यथाभाणकजगन्नाथे लोकोक्तिसूक्तिसुभाषितादिसंज्ञाभिलष्यानि वाक्यकदम्बकान्येवाभाणकानीति प्रायोवाद इति प्रोक्तम्।

वस्तुत एते खलु रूढार्थाः आभाणकाः सहृदयानां हृत्सु प्रसह्य पदं कुर्वन्ति। कविपुङ्गवैः सायासमनायासं वा सूक्त्यादीनां काव्ये समावेशेन चारुतरं जायते काव्यम्। वस्तुतः लोकैरपि रूढिवशादेकस्य पदस्य वाक्यस्य वा नैकेऽर्थाः प्रयुज्यन्ते। यथा 'नेत्रे निमील्य' इत्यस्य प्रकरणवशाच्चिन्ताराहित्यं, विचाराभावः, मरणमित्यादयोऽनेकेऽर्थाः स्वीक्रियन्ते। लोकैः तादृक्सम्भाषणे वक्रोक्तेः या नैसर्गिकी छटा वर्तते सा एव काव्ये लोकोक्तिसूक्त्याद्याभाणकद्वारा काव्यसौन्दर्यं परिपोषयति। आ समन्ताद् भणितिरूपेण व्यवह्रियन्त इत्याभाणकाः। ते च प्रायेण लोके मुखान्मुखाद् भाष्यमाणाः कस्मिन्नप्यर्थविशेषे रूढाः भवन्ति। लौकिकव्यवहारेण साहित्ये साहित्याच्च लोकानां मुखे स्वाभाविकतया पदं दधानाः आभाणकाः दैनन्दिनव्यवहारस्याङ्गभूताः जायन्ते। प्रायेणैते विविधार्था आभाणका अर्थान्तरसंक्रमितवाच्यमत्यन्ततिरस्कृतवाच्यमिति चाविवक्षित-वाच्यध्वनितया राजन्ते, किन्तु क्वचिद् दृष्टान्ततयापि प्रयुज्यन्ते। कदाचिद् वाङ्मयादङ्गीकृतानि तद्विषयकाणि वा वाक्यानि पदसमुच्चयो वा लोके

सामान्यजनेनातिसहजतया वाच्यार्थ एव प्रयुज्यमानः दृश्यते। यथा 'कर्मण्येवाधिकारस्ते' 'चरैवेति' 'सत्यमेव जयते' 'वैदिकी हिंसा हिंसा न भवति' 'अति सर्वत्र वर्जयेत्' 'पुनर्मूषको भव' इत्यादि। कविः लौकिकवाङ्मयं शास्त्रेण श्रेण्यवाङ्मयेन च संयोजयति। अथ च काव्यचर्वणायां साधारणीकरणस्य हेतुभूताः भवन्त्याभाणकाः।

अस्तु। भारतस्य राजधान्याः दिल्ल्याः संस्कृतकविपञ्चाननः जनसंवेदनायाः उद्गाता सहृदयपाठकानां मनोविज्ञानस्य ज्ञाता डॉ. रमाकान्तः शुक्लः स्वस्य काव्ये यत्र तत्र सर्वत्र प्रचुरतया सूक्तिलोकोक्त्यादीनां सहजतया प्रयोगं कृतवान्। भागद्वये निबद्धे **राजधानीरचना** इत्याख्ये कवितासंग्रहे प्रायेण ओजोगुणप्रधानाः रचनाः सन्ति। तत्र प्रयुक्तानां सूक्तीनामास्वाद्यतया तत्र यथा विषयवैविध्यं दृश्यते तदधिकृत्य तेषां विभागोऽधोनिर्दिष्टेषु बिन्दुषु कर्तुं शक्यते।

१- पदगतरूढ्याश्रिता आभाणकाः, २- वाक्यगतरूढ्याश्रिता आभाणकाः।

**१- पदगतरूढ्याश्रिता आभाणकाः-**

पदसमुदयशक्त्या एकपदेन अनेकपदैर्वा भाषायां 'मुहावरा' 'कहावत' इति च पदाभ्यामभिधीयमानाः पदरूढिरूपाः लोकोक्तयः राजधानीरचनायाः विविधासु कवितासु साधु निरूपिताः। राजनीतेः दुर्नीतिं लक्षयितुं 'वदत नेतारो मनागि'ति कवितायां तथाविधाः नैकाः पदरूढयो द्रष्टुं शक्यन्ते। 'सन्ति ये लालाटिका आस्थाननलिनीका बकाः' इत्यत्र चाटुकाराणां कृते लोके 'चमचे' इति प्रचलितपदस्य अर्थे 'लालाटिका' इति प्रयोगः, सभासदः (दरबारी इति भाषायां प्रचलितस्य) इत्यर्थे 'आस्थाननलिनीका', दीनतापूर्णयाचनार्थे 'घोणाघर्षणम्' आह्वानस्यार्थे (चुनौती इति) 'मातुर्जातः' शत्रूणां व्यथनार्थे 'धूलिलेहनम्' कृत्रिमदुःखप्रदर्शनार्थे 'नक्राश्रुजल'मित्यादय आभाणकाः अकृत्रिमाः स्फुटार्थाः हृदयस्पर्शिनश्च सन्ति।

**२. वाक्यगतरूढ्याश्रिता आभाणकाः-**

राजधानीरचनाकाव्ये वाक्यगतरूढ्याश्रितेष्वाभाणकेषु पुनः द्विधा विभागः कर्तुं शक्यते-

## १. वैदिकाः आभाणकाः-

राजधानीरचनायां यत्र तत्र वैदिकवाक्यानामाभाणकरूपेण प्रयोगो विहितः। तद्यथा '**सहस्रशीर्षं सहस्रहस्तं सहस्रपादं जनं भजन्तः। समुद्यता ये लसन्ति तेषां मदीयकविते कुरुष्व गानम्॥**' इत्यत्र **सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्** इति मन्त्रे प्रसिद्धस्य विराट्पुरुषस्य गुणान् जनतायामारोप्य यज्जनतायाः सहस्रशीर्षत्वं सहस्रहस्तत्वं सहस्रपादत्वमिति सूक्तितया प्रयुक्तम्।

'स्वराष्ट्रे जागृयामेतीदमस्माभिः सदा स्मार्यम्।' इत्यत्र 'वयं राष्ट्रे जागृयाम पुरोहिताः' इति वैदिकोद्घोषः 'सत्यमेव जयतान्न चानृतम्' इत्यत्र 'सत्यमेव जयति नानृतम्' इत्येतन्मुण्डकोपनिषदः घोषः 'यच्चरैवेति नित्यं समुद्घोषयद् भूतले भाति तन्मामकं भारतम्।' इत्यत्र 'चरैवेति' इत्येतदैतरेयारण्यकोक्तं ध्येयवाक्यं 'पश्य देवस्य काव्यं यदास्तेऽमृतं यज्जराबाधितं नो भवेज्जातुचित्' इत्यत्र 'पश्य देवस्य काव्यं न ममार न जीर्यति' इत्येतद्वेदोक्तिः एवमेव 'मा जलानां तरूणांश्च हिंसां कुरु द्यूतखेलां परित्यज्य कर्षं कुरु' इत्यत्र 'कुठार मैनं हिंसीः' 'अक्षैर्मा दीव्यः कृषिमित्कृषस्व' इत्यादि वेदवाणी उद्घोषतया प्रस्तूयते कविवर्येण। 'एकं सद् बहुधा विलोक्यते भारतम्। बहुधा सच्चैकं विलोक्यते भारतम्' इत्यत्र 'एकं सद् विप्रा बहुधा वदन्ती'ति वेदवाक्यस्य छाया दृश्यते। 'कर्म कुर्वञ्छताब्दो नरो जीवताम्' इत्यत्र 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्यस्य अथ च 'त्यागभोगौ भवेतां सखायौ सदा' इत्यत्र 'तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम्' इत्यस्य ईशावास्योपनिषदः वाक्यं सूक्तितया प्रयुक्तम्। उक्तानि वेदवाक्यानि प्रायेण न केवलं संस्कृतज्ञेष्वपि तु सामान्येऽपि भारतीयसमाजे शब्दाः शब्दान्तरेण वा मुखेषु राजन्ते।

## २. लौकिका आभाणकाः-

लौकिकाभाणकाः प्रायेण शास्त्रीयग्रन्थेभ्यः लौकिकदृश्यश्रव्यकाव्येभ्यश्च गृहीताः सम्भाषणपरम्परागताः चेति दृश्यते। सुकवयः देशकालवशात् नूलानप्याभाणकान् स्वकाव्ये प्रयुक्तवन्त इति ज्ञायते तदवलोकनेन। एतद्दृशा राजधानीरचनायां प्रयुक्ता आभाणकाः अधोनिर्दिष्टप्रकारेण द्रष्टव्याः। १.संवादमूलाः, २. लौकिकन्यायमूलाः।

## १. संवादमूला आभाणकाः-

संवादः खलु पूर्ववर्तिकाव्यादनुहरणरूपमिति। अनुहरणमित्यपरपर्यायस्य काव्यसंवादस्य विवेचनं कृतवता ध्वन्यालोककारेणानन्दवर्द्धनेन अवस्थादेश-कालादिविशेषैरपि शुद्धस्यापि वाच्यार्थस्यानन्त्यं स्वीकृतम्। वस्तुत आदिकवि-वाल्मीकिमतिरिच्य कस्यापि कवेः रचना नितान्तं नवार्था नेतीति। वाल्मीकेरारभ्य पूर्ववर्तिलौकिककवीनां साहित्यादनायासेन सायासेन वा किमपि किमपि आहृत्य स्वस्य काव्ये काञ्चने मणिमिवोट्टङ्कयितुं सिद्धा भवन्ति रससिद्धाः सुकवयः। प्रतिबिम्बवदालेख्याकारवत्तुल्यदेहिवदिति त्रिधोक्तेषु संवादेषु प्रथमं द्वितीयं च त्याज्यमथ तृतीयं तु अत्याज्यमित्यानन्दवर्द्धनः। अथ चोक्तम्- 'अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी। नूतने स्फुरति काव्यवस्तुनि व्यक्तमेवखलु सा न दुष्यति॥' 'राजधानीरचना'यां तु यथा संवादा एते पुरातनसाहित्यादाहृता अपि नवीनसन्दर्भेषु साधु परिकल्पिताः। सहृदयेष्वध्येतृषु मध्ये प्रसिद्धित्वादाभाणकवदेव ग्राह्या एते। एत आभाणकाः पुनर्द्विधा प्राप्यन्ते- शास्त्रीयाः लौकिककाव्यसम्बद्धाश्चेति।

**(क) शास्त्रसम्बन्ध्याभाणकाः-** शास्त्रसम्बन्ध्याभाणकेषु व्याकरणं दर्शनं काव्यशास्त्रं चेत्येतेषां कतिचित्प्रसिद्धसूत्रवाक्यानि तत्रावलोक्यन्ते राजधानीरचनाम्। द्रष्टव्यमत्र-

**किमपि कर्तुं तथाकर्तुं तथा चैवान्यथाकर्तुं**
**विदूषकसन्निभो नेता प्रभुर्वै लोकतन्त्रेऽस्मिन्॥**

इत्यत्र 'स्वतन्त्रः कर्ता' इत्यस्य लक्षणं सूक्तितया प्रयुक्तम्।

**अभितः परितः समया निकषा मां यद्घटते तत्प्रेक्षेऽहम्।**

इत्यत्र 'अभितः परितः समया निकषा हा प्रतियोगेऽपि' इत्यस्य प्रयोगो विहितः।

**अल्पाक्षरमसन्दिग्धं रसपूरं च सारवत्।**
**काव्यं विजयतां तत्र भवतां प्रेरणाप्रदम्॥**

इत्यत्र अल्पाक्षरमसन्दिग्धं......इति व्याकरणोक्तसूत्रलक्षणं 'रसपूरम्' इत्याधानपूर्वकं सत्कवीनां काव्यस्य वैशिष्ट्यं प्रदर्शितम्।

**उपकृतं बहु तत्र किं कथ्येत जीवत रे चिरम्।**

इत्यत्र काव्यप्रकाशोक्तस्यात्यन्ततिरस्कृतवाच्यध्वनेरुदाहरणस्य छाया परिलक्ष्यते। उक्तं यथा-

**उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।**
**विदधदीदृशमेव सदा सखे सुखितमास्व ततः शरदां शतम्॥**

अपि च-

**अलोकसामान्यसत्कवीनां मदीयकविते कुरुष्व गानम्।**

इत्यत्र 'अलोकसामान्यमभिव्यनक्ति परिफुरन्तं प्रतिभाविशेषम्' इति प्रतिभावतां कवीनां विषय उक्तम्।

**(ख) लौकिककाव्यसम्बन्धिन आभाणकाः-** काव्यसम्बन्धिषु आभाणकेषु प्रायः सूक्त्यनुगताः नीतिवचनानुगताः वा वर्तन्ते। कानिचिद् उदाहरणान्यत्र प्रस्तूयन्ते-

**धनाद्धर्मस्ततः सुखमित्ययं सिद्धान्त उच्छिन्नः।**

इत्यत्र ज्ञातव्यं यद् 'विद्या ददाति विनयं विनयाद्याति पात्रताम्। पात्रत्वाद् धनमायाति धनाद् धर्मस्ततः सुखमि'ति श्लोकस्य चतुर्ष्वपि चरणेषु प्रथमं चतुर्थं चाभाणकतया प्रसिद्धे।

**अमृतमेव विषं भवति क्वचिद्।**

इत्यत्र रघुवंशे इन्दुमत्याः प्राणान्ते अजविलापप्रसङ्गे 'विषमप्यमृतं भवेत्क्वचिदमृतमपि विषमीश्वरेच्छया' इति सूक्तिः स्मर्यते।

**निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु..........**

इत्यत्र नीतिशतकस्य 'निन्दन्तु नीतिनिपुणा......' इत्यादि वचनं समुद्धृतम्।

**कुत्र वो दिव्यं यशः स्वल्पाक्षरा क्व च मेऽत्र वाक्।**

इत्यत्र रघुवंशस्य 'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः' इति उक्तिः व्यङ्ग्यरूपेण स्वशब्दैः 'वदत नेतारो मनाग्' इति कवितायां द्रष्टव्या।

**विपदि धैर्यं तथाभ्युदये क्षमा नो**
**न वा युधि विक्रमः किं जीवनं ते।**

इत्यत्र भर्तृहरिकृतनीतिवचनं 'विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः' इत्यादि स्वानुसारेण विषीकृतम्।

**मतं यल्लोकतन्त्रं शासनं नृणां नृभिर्नृभ्यः**

इत्यत्र लोकतन्त्रस्य प्रचलिता परिभाषा उदाहृता।

**तप्तानां त्वं शरणं कथ्यसे मुधा**

इत्यत्र 'संतप्तानां त्वमसि शरणं तत्पयोद......' इति

**त्वय्यायत्तं कृषिफलमितीति ये प्राहुः**

इत्यत्र च 'त्वय्यायत्तं कृषिफलमिति' मेघदूतस्य भणिती लक्ष्येते।

**न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिच्छत्रुः।**
**मतार्थे शात्रवं मैत्री भवति वै लोकतन्त्रेऽस्मिन्।।**

इत्यत्र 'न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः। व्यवहारेण जायन्ते मित्राणि रिपवस्तथा।।' इति नीतिशतकस्य वचनमनुहृतम्।

**कलासाहित्यसंगीतप्रहीणो ना तृणं खादति।**
**पशूनां भागधेयं यद्हरे शृणु लोकतन्त्रेस्मिन्।।**

इत्यत्र **'साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः'** इति तस्यैव नीतिशतकस्य वचनस्य व्यङ्ग्यत्वं परिलक्ष्यते।

**कृते यत्नेऽपि नो सिद्धिर्भवति चेत्कोऽत्र किं कुर्यात्।**
**विरुद्धे भागधेये कर्म कुर्वाणोऽपि किं कुर्यात्।।**

इत्यत्र 'यत्ने कृतेऽपि यदि न सिद्ध्यति कोऽत्र दोषः' इति भर्तृहरेः वचनेन भावसाम्यं परिलक्ष्यते।

**२. लौकिकन्यायमूला आभाणकाः-**

लोके व्यवहारपरम्परया बहवः पदसमुच्चया आभाणकतया प्रचलिताः सन्ति। तत्र केचित्संस्कृतसाहित्ये प्रयुज्यमानाः केचिच्च संस्कृतेतरभाषाभ्य आहृताः सन्ति। राजधानीरचनायामुभयथा अप्याभाणकाः भूरि प्रयुज्यमानाः काव्यसौन्दर्यमभिवर्द्धयन्ति। यथा- 'अरण्ये रोदनं कुरुषे बधिरकर्णे जपसि बन्धो' इत्यत्र 'अरण्यरोदनमि'ति 'बधिरकर्णे जपनमि'ति चाभाणकौ हिन्दीभाषायां 'भैंस के आगे बीन बजावै भैंस खड़ी पगुराय' इत्याभाणकस्यार्थे साधुतया

प्रयुक्तौ। 'चुलुके जलधिं तुङ्गतरङ्गं करवाणि कथं वद धन्ये' इत्यत्र 'चुलुके जलधिरि'ति असम्भाव्यभावनार्थे 'वृका काङ्क्षन्ति मेषाणां मतं बत लोकतन्त्रेऽस्मिन्' इत्यत्र 'वृकैः मेषाणां मताकाङ्क्षा' स्वभावविरुद्धमतः सन्दिग्धमाचरणं व्यज्यते। 'अये म्याऊँ करोत्येषा कथं मामेव मार्जारी' इत्यत्र मार्जार्याः म्याऊँकरणं 'मेरी बिल्ली मुझसे ही म्याऊँ' इति हिन्दीभाषाया सुप्रचलितस्याभाणकस्य उत्तमं रूपान्तरणमिति। 'क्षणे रुष्टः क्षणे तुष्टः सखे त्वं, अहो चलचित्त रे किं जीवनं ते।' इत्यत्र 'क्षणे रुष्टः क्षणे तुष्टः' इति अस्थिरचित्तत्वं ज्ञाप्यम्। 'मुखे ते मक्षिकाः कुर्वन्ति भिन्भिन्' इत्यत्र हिन्दीभाषायां प्रचलितः 'मुँह पर मक्खियाँ भिनभिनाना' इति विजिगुप्सायाः भावः 'मुखे ते मधु मनसि ते कालकूटः' इत्यत्र हिन्दीभाषायां व्यवहार्यमाणः 'मुँह में राम बगल में छूरी' इत्याभाणकस्य भावः, 'मिष्टमर्पितम्' इत्यत्र उपायनीकृतमित्यर्थे हिन्दीभाषायां प्रचलितस्य 'मुँह में घीगुड़' इत्ययं भावः, 'जयो मे दक्षिणे हस्ते जयो मे वामहस्ते च।' इत्यत्र 'कृतं मे दक्षिणे हस्ते विजयो वाम आहितः।' इत्यस्य व्यञ्जना 'इदं दाहात्मकं तेजः सुगूढं यन्नृणामन्तः। मदान्धाः किं न पश्यत रे वदत भोः लोकतन्त्रेऽस्मिन्।।' इत्यत्र अभिज्ञानशाकुन्तलस्य 'शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः' इत्यतः 'दाहात्मकतेजः' सूक्तितया गृहीतः।

एतदतिरिच्य 'भारायते तथा ज्ञानमि'ति 'ज्ञानं भारः क्रियां विना' इत्यस्य 'प्रियं सत्यं हितं सारं वचो या वक्ति सा वाणी' इति 'मितं च सारं च वचो हि वाग्मिता' इत्यस्य 'शठे शाठ्यं विधेयं दुर्जनः शक्येन्न चोपकृतैः। वधार्हश्चाततायी वेदयन्ते कारगिलवीराः।।' इति 'शठे शाठ्यं समाचरेदि'त्यस्य 'सदैव सर्वे भवन्तु सुखिनः सदैव सर्वे निरामयाः स्युः। मनोरथस्यास्य सुपोषकाणां मदीयकविते कुरुष्व गानम्।।' इति 'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः' इत्यस्य 'किं किमस्ति किल काकचेष्टितं किं किमस्ति किल गृध्रचेष्टितम्' इति 'काकचेष्टा' इत्यस्य भावलक्षका आभाणकाः वर्तन्ते। पदनिष्ठा आभाणकाः व्यङ्ग्यार्थपरा सन्ति तेऽत्र द्रष्टव्याः— 'इमे ते नकुला मयूरा वैनतेया पाकनागानाम् इमे पञ्चानना द्विषतां द्विपानां कारगिलवीराः।।' 'हैयङ्गवीनं सख्यमिच्छत्यग्निना सार्धम्' इत्यत्र 'कदल्या मित्रता दृष्टा बदर्या' इत्यत्र च विरोधिधर्मयोः

सहास्तित्वासम्भाव्यत्वमिति लक्ष्यते। अपि च- 'व्यालीवदनचुम्बनम्' 'करवालधारालेहनम्' 'क्षुरधारया पदमित्रता' 'मधुराशया गरलाशनम्', 'लौहचणकाश्चर्वणीयाः' 'मुखान्मृत्योः विमुक्तः' 'शठपादचुम्बनम्', इत्यादयो लौकिकन्यायपरा आभाणकाः वर्तन्ते येषु नैके विषयाः अङ्गीकृताः।

एवं क्वचित्सूक्तिवाक्यमाध्यमेन क्वचिद्व्यङ्ग्यपदमाध्यमेन क्वचिदन्योक्तिमाध्यमेन क्वचिद्वा लोकोक्तिमाध्यमेन प्रयुक्ता आभाणकाः उदाहर्तुं शक्यन्ते। एतानि खलु पदरूपेण वाक्यरूपेण वा प्रयुक्ताः दृश्यन्ते राजधानीरचनासंग्रहे। दिङ्निर्देशमात्रमत्र कृतमस्माभिः।

●

# 'आशा-द्विशती' चेतोहरकाव्यम्

- डॉ. हर्षदेवमाधवः
राजतिलक बंगलोज़ आबादनगर-समीपम्
बोपलम्, अमदाबादम्- 380058
09427624516

आचार्य डॉ.रमाकान्तशुक्लः आधुनिकसंस्कृते राष्ट्रगीतिस्वरः राष्ट्राराधनापरे मेघगम्भीरघोषः, शिष्यवत्सलः, कविप्रवरः, काव्यमञ्चेषु नक्षत्रेषु चन्द्र इव भासमानः, नैकदेशकृतप्रवासो राष्ट्रपतिपुरस्कृतः, सदैव शुचिस्मितः, वागीश्वरीकण्ठसूत्रकारेण 'मुदिताप्रमुखः' इति निरूपितः विद्वच्छिरोमणिर्वर्तते। पञ्चसप्ततितमे वर्षे प्रविष्टोऽयं नित्ययुवा प्रगतिशीलो रचनाकारो नित्यनूतनसर्जनरतोऽस्ति। विद्वद्वरेण्यो नैकपुरस्कारभूषितः २०१२ तमे खैष्टाब्दे आशाद्विशतीकाव्यं लिखित्वा पुनरपि काव्यपीयूषं पाचयति। कविवर्यः स्वयं कथयति यत्-

**अहं तु विश्वसिमि यद् आशा मनुष्यस्य जीवनं महदुपकरोति।**

इयमाशारिग महात्मसु दुरात्मसु, नेतृषु, श्रमिकेषु, शत्रुमित्रतटस्थेषु व्याप्तास्ति। इयं विश्वव्यापिनी शक्तिरस्ति। '(प्रास्ताविकम्) द्वासप्ततितमे वर्षे 'आशा'स्तोत्रं रचयन् अयं महाकविः तस्य जीवनसन्देशं ददाति यदयं ऋग्वेदस्य ऋषिः श्रद्धायाः सूक्तं रचयति तथैव एकविंशत्यां शताब्द्यां इदम् आशाद्विशतीकाव्यं जीवनं सानन्दं सश्रद्धं समनोरथं जीवितुं प्रेरयति। इदमेव संस्कृतकवीनां गैर्वाण्या वा वैशिष्ट्यम्। आशाया नानाविधानि रूपाणि, नानाविधानि संसारचित्राणि सूक्ष्मचिन्तनयुक्तानि वर्तन्ते। मरणासन्नं पुरुषं जीवयितुं प्रेरयन्ती, तमो-नैराश्यं दिनमणेरुदयं दर्शयन्ती, गिरिलङ्घनं समुद्रतरणं कर्तुं सान्त्वयन्ती, बालकजन्मस्वप्नं गर्भे पालयन्ती, निर्वाचनमञ्जूषायां शयाना, कारागारे मुक्तिस्वप्नं सृजन्ती, काश्यां मरणेन मुक्तिं पश्यन्ती, रूपकेषु निर्वहणार्थं प्राप्त्याशां जनयन्ती, कलहं कृत्वा गतस्य पत्युः अनुनयं कामयमाना, नानायोनिषु जन्मपरम्परासु भ्रामयन्ती, काव्यप्रकाशनेन प्रसिद्धिं प्रार्थयन्ती, यजमानेभ्यः प्रतिपालयन्ती, विश्वशान्तिदिवास्वप्नं कल्पयन्ती इयमाशा कविना

विविधकल्पनाभिः आर्यासु गुम्फिता। कविना षड्दर्शनेषु आशाया माहात्म्यं ( आर्या ७४-७९, पृ. ७२, ७३) गीतं तन्नूनं चेतोहरं, हृदयावर्जकञ्च आशायाः प्रपञ्चो मायाप्रपञ्चोऽस्तीति कविना सुष्ठु निरूपितम्-

**स्थितिरियमास्ते ब्राह्मी**
**स्थित्वास्यामन्तकालेऽपि।**
**ब्रह्मपदं प्राप्स्यामी-**
**त्याशेरयति स्थितप्रज्ञम्॥** ( आशाद्विशती- ९५)

जनोऽयम् आशावादी, मुदितामयः कविरयं सदैव गीतिरत्नैः देवभाषां प्रीणयदिति आशास्ते। शतायुर्भूत्वा अमृतां गीवाणवाणीं सिञ्चेदमृतेन इति प्राथ्र्यते संस्कृतकविगणेन।

# सर्वशुक्लोत्तरायां ध्वनिविवेचनम्

- डॉ. चन्द्रप्रकाश उप्रेती
संस्कृत प्रवक्ता (अंका.), रा.इ.का. मोतियापाथर,
अल्मोड़ा, उत्तराखण्ड

सर्वशुक्लोत्तरा-काव्यसङ्ग्रहः २००८ तमे खैष्टाब्दे सङ्गृहीतः, अयं काव्यसङ्ग्रहः 'सर्वशुक्ला' इति काव्यसङ्ग्रहस्यानन्तरमागतः इत्यतः अस्य नाम 'सर्वशुक्लोत्तरा' जातम्। सर्वं शुक्लस्य अस्ति यस्यां पुस्तिकायां सा सर्वशुक्ला, सर्वशुक्लाया अनन्तरं लिखिता संगृहीता वा सा सर्वशुक्लोत्तरा, सर्वशुक्ला अर्थात् सरस्वती, अस्मिन् काव्यसङ्कलने कविवरस्य अष्टषष्टिः स्फुटरचनाः विद्यन्ते। अस्मै कवितासङ्कलनाय २०११ तमवर्षीयः भारतीयविद्याभवनस्य 'कौस्तुभ'पुरस्कारः प्रादीयत।

साहित्यशास्त्रे ध्वनिसम्प्रदायः स्वीयं प्रमुखं स्थानं बिभर्ति, सम्प्रदायस्यास्य प्रवर्तकः आचार्य आनन्दवर्धनः विद्यते। साहित्यशास्त्रे ध्वनिशब्दः पञ्चधा निरूप्यते काव्यतत्त्वविद्भिः साहित्यिकैः तद्यथा- (१) ध्वनति यः स व्यञ्जकः शब्दो ध्वनिः, (२) ध्वनति ध्वनयति वा यः सः व्यञ्जकोऽर्थः ध्वनिः (३) ध्वन्यते इति ध्वनिः यद् ध्वन्यते इत्यनेन रसालङ्कारवस्तुरूपं व्यङ्ग्यार्थत्रयमुपतिष्ठते, (४) ध्वन्यते अनेनेति ध्वनिः, इत्यनेन व्यञ्जनादिशक्तीनां ग्रहणम्, (५) ध्वन्यतेऽस्मिन्निति ध्वनिः इत्यनेन व्यङ्ग्यार्थप्रधानं काव्यं गृह्यते। एवं ध्वनिशब्देन व्यञ्जकशब्दस्य व्यञ्जकार्थस्य, व्यङ्ग्यार्थस्य व्यञ्जनाव्यापारस्य, व्यङ्ग्यार्थप्रधानकाव्यस्य च ग्रहणं जायते।

वस्तुतः वाच्यार्थापेक्षया व्यङ्ग्येऽर्थे मुख्ये सति ध्वनिरिति कथ्यते, तथाविधं च काव्यं सर्वोत्कृष्टं स्वीक्रियते।

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।**[1]

किञ्च -

**वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्।**[2]

ध्वनिसंस्थापकः आचार्य आनन्दवर्धनः ध्वनिं लक्षयति -

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥**[३]

यत्र शब्दार्थौ स्वार्थं गौणरूपेणोपस्थाप्य व्यङ्ग्यमर्थम् अभिव्यञ्जयेतां तदा व्यङ्ग्योऽर्थो वेति जिज्ञासायां ध्वनिकारेण स्फुटीक्रियते यत् कामिनीलावण्यमिव प्रसिद्धावयवातिरिक्तम् अन्यदेव किञ्चित् प्रतीयते वाच्यातिरिक्तं व्यङ्ग्यरूपं स ध्वनिः -

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥**[४]

ध्वनिसिद्धान्तस्य स्थापना व्याकरणे विशेषतो भर्तृहरिकृतवाक्य-पदीयमाश्रित्य वर्तते वाक्यपदीये नादस्फोटयोः स्वरूपं निरूप्यते -

**ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा।**
**व्यङ्ग्य-व्यञ्जकभावेन तथैव स्फोटनादयोः॥**[५]

स्फोटनादयोः व्यङ्ग्यव्यञ्जकसम्बन्धो मन्यते, स्फोटव्यञ्जका वर्णाः ध्वनिनाम्ना व्यवह्रियन्ते। आचार्य आनन्दवर्धनः मम्मटश्च ध्वनेः व्याकरणमूलत्वं स्वीकुरुतः -

**'प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानां ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति'।**[६]

**''बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः।''**[७]

**'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः'** इति शिशुपालवधस्य उक्तिरेतादृशी च रमणीयता काव्ये व्यञ्जनाशक्तेः ध्वनेर्वा सञ्जायते, यथा रमणीशरीरे लावण्यम्, मेघे विद्युत्, चन्द्रमसि ज्योत्स्ना तथैव काव्ये ध्वनेरधिष्ठानम्, ध्वनितत्त्वं न काव्यस्यावयवरूपम् अपि तु अवयविरूपेण आत्मरूपेण वा जायते।

ध्वनेर्मुख्यतया द्वौ भेदौ स्तः -

१. लक्षणामूलध्वनिः अथवा अविवक्षितवाच्यध्वनिः।

२. अभिधामूलध्वनिः अथवा विवक्षितान्यपरवाच्यध्वनिः।

**लक्षणामूलध्वनिः-**

१. अर्थान्तरसङ्क्रमितवाच्यध्वनिः

२. अत्यन्ततिरस्कृतवाच्यध्वनिः इति द्विधा,

**अभिधामूलो ध्वनिश्च-**

१. संलक्ष्यक्रमव्यङ्ग्यध्वनिः

२. असंलक्ष्यक्रमव्यङ्ग्यध्वनिः इति द्विधा विभज्यते।

ध्वनिवादिभिराचार्यैः उत्तमकाव्यस्य त्रयो भेदाः स्वीक्रियन्ते -

१. रसध्वनिः

२. अलङ्कारध्वनिः।

३. वस्तुध्वनिः।

ध्वनौ सर्वेषामपि काव्यमूलतत्त्वानां रसालङ्कारवक्रोक्त्यादीनां समावेशो भवति, ध्वनेः रमणीयत्वं शब्दार्थोभयमूलकम्। ध्वनिः काव्ये ललनालावण्यवद् अपूर्वं रम्यत्वं द्योतयति।

न केवलमितिवृत्तमात्रनिर्वाहेण कस्यापि कवेः कवित्वपदलाभः यतो हि नानाविधवाच्यवाचकरचनाप्रपञ्चपरिलसितसौन्दर्यस्य काव्यस्य सारभूतं ध्वनितत्त्वमेव। प्रतीयमानार्थसद्भावादेव अलोकसामान्यं वस्तुतत्त्वं प्रकाशयन्ती कविभारती लोकोत्तरचमत्कारमातनोति सहृदयहृदयाह्लादकं काव्यस्य जीवातुभूतं ध्वनितत्त्वं नितरां प्रकाशते। अविवक्षितवाच्यध्वनेः अर्थान्तरसङ्क्रमितप्रभेदः।

वाच्ये अविवक्षिते सति वाच्योऽर्थः अनुपपद्यमानतया यत्र अर्थान्तरेऽभिसङ्क्रामति स अर्थान्तरसङ्क्रमितवाच्यध्वनेर्विषयः भवति यथा शुक्लमहोदयस्य 'मदीयकविते कुरुष्व गानम्, 'वन्द्यतां काऽपि सा शासनासन्दिका,' 'भारतजनताऽहम्' इत्यादिकवितासु पुनरावर्तितानि पदानि मदीयकविते इत्यादीनि अर्थान्तरेऽभिसङ्क्रान्ति विशिष्टसौन्दर्यञ्चोत्पादयन्ति किमपि निगूढरमणीयार्थञ्चाभिव्यञ्जयन्ति यथा -

**अभिमानधना विनयोपेता शालीना भारतजनताऽहम्।**

**कुलिशादपि कठिना कुसुमादपि सुकुमारा भारतजनताऽहम्॥**[४]

इत्यत्र अहमिति पदं विशिष्टार्थद्योतकम्। 'मदीयकविते कुरुष्व गानम्' इत्यत्र मदीयपदं बाधितार्थः सन् विशिष्टार्थपरतया चमत्कारमातनोति।

यदुक्तम् -

**सरस्वतीपादपद्मसेवा यदीयमास्ते परं हि लक्ष्यं,**[९]
**परोपकारव्रतं पवित्रं सदैव ये पालयन्ति हृष्टाः**
**सुपूजितानां नृणां हि तेषां मदीयकविते कुरुष्व गानम्॥**[१०]

इत्थमेव 'वन्द्यतां काऽपि सा शासनासन्दिका' -

**जन्मजन्मान्तरीयं स्वकीयं परं वैरभावं परित्यज्य यस्या वशात्।**
**एकतां यान्ति नेतार एकक्षणे वन्द्यतां काऽपि सा शासनासन्दिका॥**[११]

इत्यत्र 'काऽपि' इति पदम् अर्थान्तरसङ्क्रमितं प्रतिभाति।

**लक्षणामूलायाः अत्यन्ततिरस्कृतवाच्यध्वनिः-**

अविवक्षितवाच्यध्वनेः प्रभेदस्य अत्यन्ततिरस्कृतवाच्यस्यापि समाश्रयेण काव्यच्छाया समासादितचमत्कारैव भवति। यत्र काव्ये मुख्यार्थबाधे सति सर्वथा तस्य परित्यागः अभिमतः सन् किमपि अर्थान्तरं लक्षयति तत्र लक्षणामूलात्यन्ततिरस्कृतवाच्यध्वनेः विषयः। यथा सर्वशुक्लोत्तरायां - 'वन्द्यतां काऽपि सा शासनासन्दिका' इति शीर्षकान्वितायां कवितायां -

**वञ्चनं मित्रघातस्तथा दस्युता निस्त्रपत्वं कृतघ्नत्वमित्यादयः।**
**दुर्गुणाः वन्द्यतां यान्ति सद्यो यया वन्द्यतां काऽपि सा शासनासन्दिका॥**[१२]

इत्यत्र वन्द्यतामिति पदं बाधितार्थः सर्वथा मुख्यार्थं जहाति विपरीतलक्षणया विपरीतार्थं लक्षयन् पुनः साक्षात् शब्दसामर्थ्येनाप्राकाश्यम् अत्यन्तं गर्हिततत्त्वरूपार्थं प्रकटयति। अत्र सर्वथा मुख्यार्थपरित्यागाद् वैपरीत्यसम्बन्धयोगाद् अत्यन्ततिरस्कृतध्वनिः प्रतिभासते सम्पूर्णायां कवितायां वन्द्यतामिति पदं स्वार्थे बाधितः सन् विपरीतार्थं लक्षयन् व्यञ्जनया शब्दसामर्थ्यादप्रकाश्यमत्यन्तनिन्दनीयरूपार्थं द्योतयति।

**'यां श्रितैश्छन्ददात्री प्रजा पीड्यते वन्द्यतां काऽपि सा शासनासन्दिका॥'**[१३]

अतः सर्वत्र लक्षणामूलात्यन्ततिरस्कृतवाच्यध्वनिप्रभेदविषयः।

**अभिधामूलो- ( विवक्षितान्यपरवाच्यः ) ध्वनिः**

यत्र वाच्यं स्वार्थे अन्वीयमानमपि व्यङ्ग्यनिष्ठं भवति तत्र विवक्षितान्यपरवाच्यध्वनेर्विषयः।[१४] अस्य संलक्ष्यक्रमासंलक्ष्यक्रमाविति भेदद्वयम्।

असंलक्ष्यक्रमध्वनिप्रकाशः-

उक्तं हि '**विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः**'[१५] एतेन विभावानुभावव्यभिचारिण एव न रसः अपितु रसस्तैरभिव्यज्यते अतः क्रमस्तु अस्त्येव परन्तु स क्रमः अत्यन्तं लाघवात् सूचीशतपत्रभेदन्यायेन न लक्ष्यते अतः असंलक्ष्यक्रमः इति युक्ताभिधानम्, अयं च असंलक्ष्यक्रमो ध्वनिः रसभावतदाभासादिरूपः एक एव। शुक्लवर्याणां काव्येषु रसादिध्वनिमध्ये भावध्वनेः प्राधान्यं परिलक्ष्यते। यथा -

**कुन्देन्दुहिमधवलां धवलवस्त्रावृतां हंसस्थितां**
**वरकच्छपीझङ्कृतिपरां ब्रह्मेशनारायणनुताम्।**
**मालाधरां पुस्तकधरां निःशेषजाड्यविलोपिनीम्**
**अक्षय्यविद्याविभवदां वाणीं वयं वन्दामहे॥**[१६]

इत्यत्र वाग्देवताऽऽलम्बनविभावः कुन्देन्दुहिमधवलत्वं धवलवस्त्रावृतत्वम्, निःशेषजाड्यविलोपकर्त्रादित्वञ्चोद्दीपनविभावाः वाग्देवतातिशयवशात् स्तुत्याद्यान्वरणात्मकोऽनुभावः। मतीत्यादयो गम्याः सञ्चारिणः सम्भूय कविनिष्ठ-वाग्देवताविषयक-रतिभाव-ध्वनिं परिपोषयन्ति। इत्थं 'वाणीं वयं वन्दामहे' शीर्षकान्वितायां सम्पूर्णकवितायां कविसहृदयनिष्ठवाणी-विषयकरतिभावस्य परिपोषाद् गुरुदेवतादिविषयकरतेः भावत्वाद् रतिभावध्वनिः चमत्कुरुते।

इत्थमेव अन्यास्वपि कवितासु 'सुरभारती विजयते,' 'धन्वन्तरिं तमीडे', 'वेदवाणीं नुमः', 'महाकालमालिका', 'उज्जयिनीयं जयति', 'श्रीवरदेश्वराष्टकम्', 'नमः शास्त्रिणे वीरधुर्याय तस्मै' इत्यादिषु रतिभावध्वनेः चमत्कारः।

सर्वशुक्लोत्तरायां रतिभावध्वनिः दिङ्मात्रमुदाह्रियते -

**मदर्चनाकृते शिरांस्युपायनीकृतानि यैः**
**धनं वपुस्तथा मनः सहर्षमर्पितानि यैः।**
**अवापुरात्मवक्षसि ज्वलद्भुशुण्डिगोलिकाः,**
**गतास्त एव मे जना सदैव वन्दनीयताम्**
**अहं स्वतन्त्रता भणामि........................॥**[१७]

इत्यत्र प्रथमत्रिषु पादेषु वर्णितविभावाऽनुभावसञ्चारिभिः उत्साहप्रतीतेर्वीररसो ध्वन्यते। चतुर्थे पादे एतावदुत्साहपरिपूर्णदेशभक्तानां वन्दनार्हत्वप्रतिपादनेन रतिभावध्वनिः वीररसस्य च तदुपकारकत्वात् तदङ्गता, अतः रसवद् अलङ्कारस्यापि विषयः। यदुक्तम्-

**प्रधाने यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।**

**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥**[८]

इत्थं कविवरस्य कवितासु ध्वनेः योजना हृद्या वर्तते, कवेः सर्वशुक्लोत्तरायाम् अधिकासु कवितासु भावध्वनिः विद्यते, रतिभावध्वनिः कवितासु चमत्कारं जनयति अर्थान्तरसङ्क्रमितमत्यन्ततिरस्कृतं च वाच्यं चतुर्गुणितं माधुर्यं तनुते। कविवरस्य कवितासु रसध्वनिरपि काव्यशोभां वर्धयति। कवेः कथनशैली यद्यपि सरला तथापि ध्वनिस्तु सर्वशुक्लोत्तरां चमत्करोति, भावध्वनेः प्राधान्यमस्त्यत्र।

क्रमेऽस्मिन् ध्वनेः दिङ्मात्रमेव प्रकाशः कृतः ध्वनिस्तावद् विस्तृतः विषयः, कवेः स्फुटकवितासु ध्वनेः भेदोपभेदाः प्रायशः सन्ति, अतो विस्तरभयाद् नात्राधिकं समुपस्थापितम्।

**सन्दर्भग्रन्थसूचिः**

१. काव्यप्रकाशः, आचार्यमम्मटः, १.४, चौखम्बा प्रकाशनम्, वाराणसी, संस्करण13, 2008

२. साहित्यदर्पणम्, आचार्यविश्वनाथ ४.१, चौखम्बा प्रकाशनम्, वाराणसी

३. ध्वन्यालोकः, आचार्य आनन्दवर्धनः १.१३ (संपादक-आ. विश्वेश्वरः), ज्ञानमण्डल लि. वाराणसी-२००९

४. तत्रैव, १.४

५. वाक्यपदीयम्, आचार्यभतृहरिः, ब्रह्मकाण्डम्, श्लोक ९६, चौखम्बाप्रकाशनम्, प्रथमं संस्करणम् १९९०

६. ध्वन्यालोकः, आचार्य आनन्दवर्धन, १.१३ (संपादक-आ. विश्वेश्वरः), ज्ञानमण्डल लि. वाराणसी २००९

७. काव्यप्रकाशः, आचार्यमम्मटः, १.४, चौखम्बाप्रकाशनम्, वाराणसी, वि.सं. २०६७

८. भारतजनताऽहम्, सर्वशुक्लोत्तरा, आचार्यरमाकान्तशुक्लः, देववाणी

परिषद्, नई दिल्ली २००८

९. मदीय कविते कुरुष्व गानम्, सर्वशुक्लोत्तरा, आचार्य रमाकान्तशुक्लः देववाणी परिषद्, नई दिल्ली २००८

१०. तदेव

११. वन्द्यता काऽपि सा शासनासन्दिका, श्लोक १, सर्वशुक्लोत्तरा, आचार्य रमाकान्तशुक्ल, देववाणी परिषद्, नई दिल्ली २००८

१२. मदीय कविते कुरुष्व गानम्, श्लोक ६, सर्वशुक्लोत्तरा, आचार्य रमाकान्तशुक्ल, देववाणी परिषद्, नई दिल्ली २००८

१३. तदेव, श्लोक ४

१४. 'विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः' काव्यप्रकाशः, ४ उल्लासः, नागेश्वरी टीका, पृ.३३

१५. नाट्यशास्त्रम्, भरतमुनिः।

१६. वाणीं वयं वन्दामहे, श्लोक १, सर्वशुक्लोत्तरा, आचार्यरमाकान्तशुक्लः, देववाणी-परिषद्, नई दिल्ली २००८

१७. अहं स्वतन्त्रता भणामि, श्लोक १, सर्वशुक्लोत्तरा, आचार्य रमाकान्तशुक्ल, देववाणी परिषद्, नई दिल्ली २००८

१८. ध्वन्यालोकः, आचार्य आनन्दवर्धनः, २.५ (संपादक-आ. विश्वेश्वरः), ज्ञानमण्डल लि. वाराणसी २००९

●

# भाति मे भारतम्

- न्यौपानेछबिलाल:
शोधच्छात्र:, नव्यन्यायविभाग:,
श्रीला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली

संस्कृतसाहित्यं हि स्वगर्भे समस्तसुहृद्भावभारमानन्दवद्वाहयद्विराजते। भारतीयपुरातनी ईश्वरप्रवर्तिता ऋषिमुनिजनवर्धिता व्यासादिभिराप्तलौकिकता आधुनिककविसम्पोषिता च भारतीयसंस्कृतिः पुरा कालादेव विश्वसमाजे प्राणिमात्रकल्याणाय प्रकृत्या सह स्वनिःश्वासं सम्मिल्य अधुना यावज्जीवत्यस्तीत्यस्माकं भारतीयसंस्कृतवाङ्मयस्य महद्गौरवम्। अत्रेदमेव मूल्यं यदस्माकं भारतीयसंस्कृतिर्हि संस्कृतभाषायाः देववाणीत्वस्य प्रभावेण परिषदि स्वमूर्धन्यस्थानमलङ्कुर्वती विराजतेऽस्मिन् चराचरप्रपञ्चात्मके जगति। संस्कृतभाषानिष्ठैवास्माकं पुरातनी परम्परा अधुनाऽपि राराजते इत्यत्र अस्ति केषाञ्चिदृषीणां महर्षीणां कवीनां विदुषां च महद्योगदानम्। आधुनिकेऽपि युगे तथाविधाः ऋषयो मुनयः कवयो विद्वांसश्च स्वकाव्यग्रन्थवैपुलेन संस्कृतभाषां सेवन्तः शोभन्ते येन भारतीयसंस्कृतिः अन्यसंस्कृतिनिष्ठस्वानुकूलपक्षान् समाहृत्य दुस्संस्कृतिप्रभावेण चानाहता सती परिवर्धयन्ती दृश्यते। अत्र आधुनिके युगे केचिद्विद्वांसो राराजन्ते ये हि कालिदासादिवत् स्वात्मानं क्षुद्रतरं मन्वाना अपि संस्कृतभाषामाध्यमेन भारतीयपुरातनीं सुसंस्कृतिमुडुपेनाद्दुिःसाध्यसाधनेन सागरवद् विश्वसमाजं तितारयिषवः सन्ति। तेष्वन्यतमा इमे आदरणीयाः गुरवः प्रो. रमाकान्तशुक्लमहोदयाः।

अहं तेषां श्रीमतां द्विपञ्चसप्ततितमजन्मदिवसमुपलक्ष्य 'स्वस्तिवाचनम्' इत्यन्वर्थनामाभिधेन सार्वभौमसंस्कृतच्छात्रसमवायेन आयोजितायामस्यां राष्ट्रियसंगोष्ठ्यां यथामत्यत्र श्रीरमाकान्तशुक्लगुरुवर्याणां विविधकृतीनां दार्शनिक-सामाजिका-ऽऽधुनिकादि पक्षदिशा स्वपत्रवाचनमीहे।

मान्याः! इदं तु सत्यं यदेतेषां काव्यकौशलगुणं सर्वातिशयी वर्तते संस्कृतप्रेमिणां जगति। एतेषां रचनासु सर्वत्रैव ओजःप्रसादादिगुणगुम्फिताः

राष्ट्र-समाज-संस्कृति- बन्धु-सुख-दुःखादिभावाः दरीदृश्यन्ते। एते हि शब्दगन्धर्व इव शब्दपाकपुरस्कर्तार इति विषयः विचारपदवीमारूढः। यथा सारेगमपध नि-इति सप्तस्वरेषु व्यवकीर्णा सङ्गीतसरित् जनमनस्सु हर्षमामोदं वा जनयति तथैव एतेषां विविधकाव्यकृतिषु प्रकटिता राष्ट्रोन्नतिभावना सहृदयानां मनांसि चमत्करोति। एकैका काव्यकृतिरप्येतेषां वैशिष्ट्यं भजते, किं पुनः काव्यकृतिसमवायेन?। तथापि 'भाति मे भारतम्', भारतजनताऽहम्,' रौति ते भारतम्', 'पुनर्नो भारते भूयात्', 'किं जीवनं ते', 'एकं सद्बहुधा विलोक्यते भारतम्', 'भारतस्य विजयोऽयम्', 'मित्रतां कामये शात्रवं चाश्रये', 'योऽयं कृतः शपथस्त्वया' इत्यादिषु कतिचित्प्रयोगान् समीक्ष्य तत्र शब्दपाकः प्रदर्श्यते।

प्रथमन्तावत् शब्दपाको विवेचनीयः। सततमभ्यासवशात् सुकवेः वाक्यं पाकमायाति। पदानामावापोद्धशरणपूर्वकं सन्निवेशेन कवेर्वाक्यं यदा पाकं प्राप्नोति तदा कवेः भारती सिद्धा भवति। वस्तुतः पदविन्यासे स्थैर्यमेव पाकशब्दवाच्यः। तदुच्यते आलङ्कारिकैः- पदनिवेशनिष्कम्पता पाक इति। अत्र विषये वामनाचार्यो वदति-

**आवापोद्धरणे तावद्यावद्दोलायते मनः।**
**पदानां स्थापिते स्थैर्यं हन्त! सिद्धा सरस्वती॥**

आग्रहपरिग्रहादपि पदस्थैर्यपर्यवसायो यत्र भवति तत्र पाको जायते। पदानां परिवृत्तिवैमुख्यं पाकः इति तात्पर्यम्। तदेव पुनः स्पष्टीकृतम्-

**यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।**
**तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते॥**

सिद्धान्ततः यायावरीयमतमनुसन्धाय शब्दपाको विविच्यते। तदुक्तं राजशेखरेण- **कार्यानुमेयतया यत्तच्छब्दनिवेद्यः परं पाकोऽभिधाविषयस्तत् सहृदयप्रसिद्धसिद्ध एव व्यवहाराङ्गमसौ** इति।

सोऽयं काव्यपाको बहुधा विभक्तः। श्रीमतां रमाकान्तशुक्लमहोदयानां काव्ये यादृशः पाकोऽनुभूयते आस्वाद्यते वा सुधीभिः, स न शब्दवाच्यः। प्रतिपदं प्रतिवाक्यं यत्र वाङ्मधुमयं परिस्रवति तत्र किं किं विवेच्यमिति मत्वा दिङ्मात्रमुल्लिख्यते।

शब्दपाकपदेन न केवलं सुप्तिङ्रूपात्मकं पदमेव काव्यपाकेऽभीष्टम्।

एतत्तु केवलं सौशब्द्यम्। यः शब्दो यत्र प्रयुक्तः सर्वमभीष्टार्थं जनयति तेन विना तत्पर्यायभूतैरितरैः शब्दैः कवेरभिलषितं न सिध्यति स एव शब्दपाकः। तदैव काव्यं परिपच्यते। यथा- भाति मे भारतमितिगीतिकाव्ये दृश्यते।

तत्र संवादमाध्यमेन 'रौति ते भारतम', 'भाति मे भारतमि'त्यनयोः काव्ययोः सङ्गतिः प्रदर्शिता। तथा च भाति मे भारतमिति काव्यस्य प्रयोजकीभूते रौति ते भारतमिति काव्ये दुर्जन-दुर्बल-दीर्घपङ्क्ति-भिक्षापरबालक-गालिपोषित-न्यक्कृततोषित- बलात्कारसदृशपैशाचकृत्य-अशिक्षितातमो-उग्रकृत्यादिदोषैः भारतस्य दुर्दशां वीक्ष्य सहसा सुकवेः रमाकान्तस्य भारतस्य अवनतिं प्रदर्शयति कश्चित्, तथा च-

**कर्हिचिद्विश्वबन्धुत्वमुद्घोषयत् ,**
**पावयद्विश्ववन्द्यैश्चरित्रैर्जगत् ।**
**यत्तदेवाद्य विद्वेषहिंसाप्लुतं**
**रौति ते भारतं रौति ते भारतम्॥**

तादृशदोषदृष्टिपातिनं जनं कविरयं रमाकान्तः प्रतिवदति-

**यत्त्वया कीर्त्यते दोषजातं सखे!,**
**तन्मया सूचितम् ह्येकपद्ये पुरा।**
**दोषवर्जं मया सद्गुणाः सञ्चिताः**
**तेन प्रोक्तं मया 'भाति मे भारतम्'॥**

भारतस्य प्रकर्षद्योतनाय प्रेरितः सन् विश्वसमाजे कविरयं 'भाति मे भारत'मिति काव्यं प्रस्तौति। काव्येऽस्मिन् कविना भारतीयसंस्कृति-भारतराष्ट्र-संस्कृतभाषाणां विविधदार्शनिक-ऽऽध्यात्मिक-सामाजिकपक्षाः उपस्थापिताः सन्ति। भारतकाव्यमिदं प्रारम्भादेव महनीयं कार्यमिदं विदधद् विलोक्यते-

**विश्वबन्धुत्वमुद्घोषयत् पावनं**
**विश्ववन्द्यैश्चरित्रैर्जगत्पावयत्।**
**विश्वमेकं कुटुम्बं समालोकयद्**
**भूतले भाति मेऽनारतं भारतम्॥**

काव्यमिदं स्रग्विणीवृत्तं वर्तते। वस्तुनो वर्णनं यथावदतोऽत्र स्वभावोक्तिरलङ्कारो मुख्यः। यं राष्ट्रं मानव-दानव-सज्जनासज्जन-सद्धन-

निर्धन-सद्बल-निर्बल-देवता-योगि-भोगिनः समेऽपि समुपासते तद् राष्ट्रं यदि भूतले भाति तदा भूतलेन किन्न नाम सुकृतं सौभाग्यञ्चाधिगतमित्यभिदधत् कविः स्वस्य देशस्य गरिमाणं परमविदग्धतयाभिव्यञ्जन्नाह-

**मानवैर्दानवैस्सज्जनैर्दुर्जनैः ,**
**सद्धनैर्निर्धनैस्सद्बलैर्निर्बलैः ।**
**निर्जरैर्योगिभिर्भोगिभिश्चार्थितं**
**भूतले भाति मेऽनारतं भारतम्॥**

कवेः राष्ट्रप्रेमा सर्वातिशायी वर्तते, इति राष्ट्रस्यात्मानं राष्ट्रस्य भावनां च प्रतिपादयदिदं काव्यं राष्ट्रियं काव्यमित्यपि वक्तुं शक्यते। तथा च-

**यत्प्रजातन्त्ररक्षापरैर्मानवै -**
**र्नास्ति हीनं कदापि प्रभाभासुरम्।**
**आत्मतेजोमयं तद्ध्यहिंसामयं**
**भूतले भाति मेऽनारतं भारतम्॥**

कवेः प्रतिभायाः वाचश्चास्त्युल्लेखनीयं सौन्दर्यं यदसौ यल्लक्ष्यत्वेन वृणुते तत् स्वपाठकस्याग्रे प्रत्यक्षीकृत्य प्रतिष्ठापयति। सः तस्मिन् भावे स्वकीयं श्रोतारं वाध्येतारं निमज्जयति। सोऽपि तावद्भावभावितमना भवति। भाति मे भारतमित्यत्र प्रयुक्तो मेशब्दो न केवलं कविपरतामेव, अपि तु सर्वानपि पाठकान् श्रोतृवृन्दांश्च अन्तर्भाव्य भारतदेशः सर्वेषां विद्यते इति सूचयति। तामेव भावनां प्रकाशयत्पद्यमिदं साधु सङ्गच्छते-

**भारतं वर्तते मे परं सम्बलं भारतं**
**नित्यमेव स्मरामि प्रियम् ।**
**भारतेनास्ति मे जीवनं जीवनं**
**भारतायार्पितं मेऽखिलं चेष्टितम्॥**

**भाराताद् भाति मे भूतलं भूतलं**
**भारतस्य प्रतिष्ठास्ति मे मानसे।**
**भारतेऽहं प्रपश्यामि विश्वेश्वरं**
**भारत! क्षोणिशृङ्गार! तुभ्यं नमः॥**

काव्यस्यास्य सम्यगवलोकनेन न केवलमस्य लौकिकस्वरूपं मनसि समुल्लसत्यपि तु लौकिकस्य अलौकिकेन सह सम्बन्धं संस्थाप्य ऋजुकुटिलनानापथजुषां सत्त्वेऽपि अनेकेन प्रतीतिस्तथापि मूलतः तमेव परमात्मानं विदित्वा मुक्तिरिति उद्घोषयति। यथा हि-

**दर्शनज्ञानचारित्र्यसम्मेलनं ,**
**यत्र मोक्षस्य मार्गं भणन्त्यागमाः।**
**ज्ञानमास्ते च भारः क्रियां वै विना**
**भूतले भाति तन्मामकं भारतम्।।**

काव्येऽस्मिन् समेषां मानवजीवनोपयोगिप्रश्नानामपि उत्तरं प्राप्यते इति दर्शयतीदं पद्यम्। यथोक्तं श्रीमता शिवदत्तचतुर्वेदेन-

**कुत्र सौख्यं समस्तं मिलेत्पूर्णतः?**
**कुत्र तृप्तिः समासादनीया भवेत्?।**
**प्रश्नजातस्य सर्वस्य तत्रोत्तरं**
**'भाति मे भारतम्' 'भाति मे भारतम्'।।**

कविना भारतीयानां जनानां स्वाभिमानोऽपि प्रशंसावद्भिर्वचनैः प्रकटितोऽस्ति। अत्र समागत्य निवसतो विविधधर्मावलम्बिनो जनान् आत्मसात्कर्तुं भारतदेशस्य राष्ट्रियां क्षमतामपि स महता गौरवेण लिखितवानस्ति।

एतावता प्रबन्धेन श्रीमतामाचार्याणां प्रो.रमाकान्तशुक्लमहोदयानां भाति मे भारतमितिकाव्यस्य वैशिष्ट्यं द्योतयन्ती तेषां कृतीनां आधुनिककविसमवाये नवीना चेतना जागृता अभूत्। यया चेतनया समेऽपि नूतनकवयः तेषां कविपरम्परामनुसन्दधानाः काव्यरचनां प्रतिजानते। मन्येऽहं यदागामिनि काले श्रीमतां वचोविन्यासयुक्तकाव्यपरम्परा सततं देववाण्या संस्कृतभाषया सुशोभिता सती विश्वसमाजं कामपि नूतनां दृष्टिं प्रदास्यति यया देववाण्याः सततं कामचाराभावपूर्वकमनवच्छिन्नधाराप्रवाहेण निषेवनं जगति जायेतेति श्रीमतां गुरुवर्याणां जन्मदिवसे तेभ्य आशीः प्राप्य भगवतः सविधे संस्कृतभाषासेविभ्यः समेभ्यः दीर्घायुः कामनाहेतुभूतमदृष्टं परिवर्धयन्त्विति प्रार्थ्य स्ववाचमवसाययामि।

।। ॐ शान्तिः शान्तिः शान्तिः।।

●

# भाति मे भारतम्, भाति मे भारतम्

**डॉ. शुचिता दलाल**
विभागप्रमुखा, स्नातकोत्तरसंस्कृतविभागः,
राष्ट्रसन्ततुकडोजीमहारानागपूरविद्यापीठम्, नागपूरम् (महाराष्ट्र)

स्मर्यन्ते मया विगतानि दिनानि। त्रिंशत्वर्षात्पूर्वं घटिता इयं घटना। प्रथमवर्षे तदाऽहं अधीतिनी आसम्। नागपूरविद्यापीठस्य स्नातकोत्तर-संस्कृतविभागेन समायोजिते सम्मेलने कविवर्याः डॉ.रमाकान्तशुक्लमहाभागाः आगताः आसन्। सायंकाले तेषां संस्कृतगीतगायने काव्यगीतं समजायत। राष्ट्रियभावना-भक्ति-प्रेम-जिज्ञासाः स्पष्टतया स्मर्यन्ते मया तेषां गायने। अद्यापि तेषां गीतिगायनं मे रोचते। 'भाति मे भारतम्'। इत्यस्मिन्गीते तेषां वाग्वाणीं श्रुत्वा देववाण्याः प्रसादः प्रदत्तः सरस्वतीदेव्याः इति मन्येऽहम्।

अचिरादेव विद्वद्वर्याः डॉ. रमाकान्तशुक्लमहाभागाः मां पुनर्न मिलितवन्तः। काशीनगर्यां अन्ताराष्ट्रियसंस्कृतसम्मेलने तत्र भवन्तं दृष्ट्वा पुनश्च 'भाति मे भारतम्' इत्यस्य काव्यस्य शब्दाः श्रुताः।

**भाति मे भारतम्। भूतले भाति मेऽनारतं भारतम्॥**

सुशोभितं भारतं दर्शयति इयं ध्रुवकम्। 'वसुधैव कुटुम्बकम्।' इति ज्ञात्वा विश्वबन्धुत्वभावना उद्घोष्यते भारतमात्रा इति मन्यन्ते महाभागाः। राष्ट्रियचेतनां जागरय्य कविवर्येण राष्ट्रभक्तिं प्रति तेषां भावना प्रदर्शिता।

संस्कारसभ्यतासंस्कृतिं प्रति कविवर्याणां श्रद्धा अस्मिन्काव्ये प्रवहति खलु। निरलसतया धार्मिकसामाजिकव्यवस्थां प्रत्यपि कविवर्येण स्वमतं प्रदर्शितम्। वैदिकपरम्परा जीवनसाधनार्थं सुदृढा भवेयुः इतीयं मनीषा तेषाम् इति मन्येऽहम्। भारतीयतत्वज्ञानं उपनिषद् च न केवलं मोक्षपन्थाः उपदिशति अपि तु व्यवहारिकसत्तायां जीवात्मनोः माहात्म्यं ज्ञात्वा कविवर्येण निवेदित असौ विषयः स्वकाव्ये।

**वेदभाभासितं सत्कलालासितं**
**रम्यसङ्गीतसाहित्यसौहित्यभूः।**
**भारतीवल्लकीझङ्कृतैर्झङ्कृतं**
**भूतले भाति मेऽनारतं भारतम्॥**

**यत्त्रयीसाङ्ख्ययोगादिमार्गैर्युतं**
**जीवनं मुक्तमाकर्तुमाकाङ्क्षति।**
**शीलसन्तोषसत्यादिभी रक्षितं**
**भूतले भाति मेऽनारतं भारतम्।।**

कतिपयानां मन्दिराणां वर्णनेन जनमनांसि श्रद्धां प्रज्वालयन्ति ते। पर्वमहोत्सव इत्यादीन्धार्मिककार्याणि गौरवाङ्किकतानि भ्ज्ञारताय कतिपया: नद्यः प्रवहन्ति भारतवर्षे। जाह्ववी-चन्द्रभागा-भानुजा-नर्मदा-तुङ्गभद्रा-विपाशादिभिः नदीभिः भारतं भावितम्। हिमालयादयः पर्वताः भारतवर्षस्य विशालतां दर्शयन्ति। भारतमातुः निसर्गसौंदर्यं सुलभतया वर्णितं कविवर्येण।

**विन्ध्यसह्याद्रिनीलाद्रिमालान्वितं**
**शुभ्रहैमाद्रिहासप्रभापूरितम् ।**
**अर्बुदारावलीश्रेणिसम्पूजितं**
**भूतले भाति मेऽनारतं भारतम्।।**
**यत्र मन्दाकिनी पापसंहारिणी**
**यत्र गोदावरी चारुसञ्चारिणी।**
**देववाणी च यत्रास्ति मोदाकुला**
**भूतले भाति तन्मामकं भारतम्।।**

माननीयानां कवित्वं दृष्ट्वा ज्ञायते मया यद् तत्रभवान् न के वलं कविवर्यः अपि तु काव्यशास्त्रज्ञोऽपि । ते काव्यशास्त्रीयनियमानुसारं नदीपर्वतानां वर्णनरमणीयार्थं आवश्यकमेव। डॉ. रमाकान्तशुक्लमहाभागाः शास्त्रपरम्प्रामाध ृत्य चन्द्रसूर्यनदीपर्वतजलादीनां वर्णनं विलोकयन्ति। कवेः प्रगल्भता शाब्दायोजना सहृदानास्वादयन्ति। राष्ट्रियवैज्ञानिकदार्शनिककाव्यशास्त्रीयधार्मिकेषु कविवर्येण रचितं वैज्ञानिकविषयकं इदं पद्यम्-

**विद्युदुत्पादने तैलसंशोधने**
**इन्धनान्वेषणे लौहनिष्पादने।**
**यन्त्रनिर्माणकार्ये समर्थं च सद्**
**भूतले भाति मेऽनारतं भारतम्।।**

विद्युदुत्पादनं तैलसंशोधनं इन्धनान्वेषणं लौहनिष्पादनं यन्त्रनिर्माणं चिकित्सालयादीनां स्थापनादीनां वर्णनं विस्तृतात्मकं प्रस्तोतुं कविवर्येण।

वैज्ञानिकक्षेत्रं निश्चितेन डयेरन् अति आशास्ते।

भारतमातुः रक्षणाय रेल–नौका–विमानयानानि स्थापितानि सन्ति। नैकां समस्यां पारयित्वा सुदृढं भवेत्भारतमिदमिति कविवर्याणां अशा दृश्यतेऽत्र। अतः भूतले 'भाति मे भारतम्' इति नामकं इदं काव्यतुलनीयमेव।

साम्प्रतिके काले प्रवहितं विज्ञानं प्राचीनकालेऽपि विहरति स्म। वास्तुविानस्य कोटित्वमवर्णनीयं खलु। हस्तिगुम्फा–खर्जुराहो–कोणार्कादयानि स्थलानि वास्तुशास्त्रस्याभूतपूर्वं कार्यमेव। प्राचीनभारतविज्ञानं मनोज्ञतया वर्णितं महाभागेन।

**हस्तिगुम्फामजन्तालौरां दधत्**
**खर्जुराहो-गया-सारनाथैर्लसत्।**
**ताज-कोणार्क-विष्णुध्वजैर्मण्डितं**
**भूतले भाति मेऽनारतं भारतम्।।**

भाषावैविध्यं भारतस्य वैशिष्ट्यमेव। मनोभावनानामेकीरणाय राष्ट्रभाषा गौरवाङ्किता भारतवर्षेण। कवेः भाषासम्बद्धिताः विचाराऽप्युच्चतमाः। कविवर्याः संस्कृत–प्राकृत–तामिल–तेलुगु–कन्नड–कैरली–बांगलभाषासु सौंदर्यवैविध्यं निवेदयन्ति।

**संस्कृतं प्राकृतं तामिलं तेलुगुं**
**कन्नडं कैरलीं बांगलामालाम्**
**वाच्यमन्यां च तां तां ब्रुवद् वर्धते**
**राष्ट्रभाषायुतं मामकं भारतम्।।**

सत्यमेव विश्वमण्डले शीर्षस्थो विलसितो भारतदेशोऽमाकम्। केरलमहाराष्ट्रकर्णाटकादीनां राज्यानां परिचयं दतवा नाट्यनृत्यानामपि शोभा वर्णिता तैः महाभागैः। श्रीरामकृष्णस्वामिदयानन्दसदृशानां सतां चरणौ स्पृष्ट्वा श्रीतिलकमोखले महात्मगान्धीजीसदृशान् देशभक्तानपि नम्रतया प्रणमन्ति कविवर्याः। ये महानतः राष्ट्रहिताय स्वजीवनं समर्पयन्ति तान् प्रति प्रणीतेन कविना श्रद्धा समर्पिता।

कवीनां काव्यशैलीविषयकं किं वर्णनीयम्? तथा कथं वर्णनीयम्? कविवर्येण रामायणमहाभारतभगवद्गीतादिविषयकं लिखितं वर्णनमवलोक्य

संस्कृतसाहित्यसौंदर्यं प्रति महाभागाः शब्दवर्णपदमाधुर्यमाकाङ्क्षन्ति वावकान्। श्रीहंशकालिदासभासादीनां गद्यपद्यान्वितानां काव्यानां सुलेखात्तेषां काव्यं मधुरमेवास्तीत्यत्र न संशयो वर्तते।

व्यासवाल्मीकिरत्नाकरैरुज्ज्वलं
स्वादुकादम्बरीपानलुब्धं सदा।
कालिदासेन भसेन संपोषितं
भूतले भाति मेऽनारतं भारतम्।।
गद्यपद्याञ्जितं श्रवदृश्याञ्जितं
गीतनृत्याञ्जितं लोकवेदाञ्जितं।
सप्रसादं समाधुर्यमोजोन्वितं
भूतले भाति मेऽनारतं भारतम्।।

वेणुसन्नादिते पावनवृन्दावने चारुकादम्बिनिनीगोपालस्य कृष्णलीलावर्णनमाकृष्यन्ते महाभागैः रमाकान्तशुक्लैः। सत्यमेव कवेः अखिलमेव वर्णनं मधुरं मधुरमेव। शब्दायमानानां विहङ्गानां वर्णनेषु कविवर्याणां शाब्दसौन्दर्यं देववाण्याः माधुर्यं च पुनश्च अवगाह्यते।

कोकिलैः कूजितं षट्पदैर्गुञ्जितम्
केकिभिर्नृत्यपारङ्गतैर्नादितम् ।
सारिकाकीरकवादप्रवादैर्युतं ,
भूतले भाति मेऽनारतं भारतम्।।

एवमस्माकं भारतमद्यापि विराजते तस्य वैविध्यकारणादिदं सौन्दर्यवैविध्यं कविवर्याः निवेदयन्ति एवं प्रकारेण-

यत्र सत्यं शिवं सुन्दरं राजते
रामराज्यं च यत्राभवत्पावनम्।
यस्य ताटस्थ्यनीतिः प्रसिद्धिं गता
भूतले भाति तन्मामकं भारतम्।।

●

# अस्मभ्यं गौरवस्य विषयः।

-डॉ. ( श्रीमती ) सावित्री गुप्ता
सेवानिवृत्ता एसो. प्रोफेसर संस्कृतविभाग
लक्ष्मीबाईमहाविद्यालयः, दिल्लीविश्वविद्यालय

कोऽस्ति अस्मिन् हिन्दीसंस्कृतभूतले यः राष्ट्रपतिपुरस्कारेण पुरस्कृतो पद्मश्रीविभूषितेन अनेकानेकैः विभिन्नैः सम्मानैः सम्मानितेन डॉ. रमाकान्तशुक्लमहाभागेन सुपरिचितः न स्यात्? केन वा महाभागस्य काव्यकृतीनां रसास्वादनं कृतं न स्यात्? अनेन विदुषा मम परिचयः १९८४ तमे वर्षे संजातः। तदुपरान्तं महाभागोऽसौ नैकवारं दिल्लीविश्वविद्यालयस्य लक्ष्मीबाईमहाविद्यालये संस्कृतविभागेन आयोजितेषु विभिन्नकार्यक्रमेषु कदाचित् सारस्वतातिथिरूपेण कदाचित् विद्वद्वक्तृरूपेण कदाचित् अध्यक्षरूपेण कदाचित् निर्णायकरूपेण, कदाचित् मुख्यातिथिरूपेण चामन्त्रितः। अनेन कृतेन काव्यपाठेन संपूर्णोऽपि संगोष्ठीकक्षः मन्त्रमुग्धः भवति। यद्यपि राजधानी-महाविद्यालये असौ मातृभाषायाः रीडरपदमलंकरोति स्म तथापि संस्कृतजगति एषः देववाण्याः विद्वद्रूपेणैव आमन्त्र्यते सम्मान्यते च।

१९६१ तमे वर्षे महाभागेनानेन आगराविश्वविद्यालयतः हिन्दी एम. ए. परीक्षा सर्वोच्चाङ्कान् स्वर्णपदकं च प्राप्य उत्तीर्णा। ततः १९६४ तमे वर्षे विदुषानेन संस्कृत एम.ए. परीक्षापि प्रथमश्रेण्यामेवोत्तीर्णा। तत आरभ्य विद्वानसौ अनवरतं देववाण्याः प्रसाराय प्रचाराय च अस्याः उत्तरोत्तरविकासाय च कटिबद्धः, परिश्रमरतश्च जातः। अनेन कृतानां कृतीनां संख्या षष्ट्यधिका वर्तते। अनेन रचितानां काव्यानां नाटकानां च प्रसारणम् अनेकधा आकाशवाण्या दल्लीदूरदर्शनेन च कृतम् अधुनापि क्रियते च। 'भाति मे भारतम्' इत्यनेन कृतं काव्यं न केवलं संस्कृतानुरागिणाम् अपि तु संस्कृतेतराणां सहृदयानामपि मनसः आकर्षणकेन्द्रम्। अनेन न केवलं स्वदेशस्य भारतभूमेः महिमा गीतः अपि तु विदेशप्रशंसायामपि अनेन अनेकासां संस्कृतपत्रिकाणां प्रधानसम्पादकरूपेणापि कार्यं कृतम्।

१९७५ तमे वर्षे अनेन महानुभावेन 'देववाणी-परिषद्, दिल्ली' इति संस्था संस्थापिता। यद्यपि अनेन विदुषा लब्धानां सम्मानानां पुरस्काराणाञ्च सूची अतीव दीर्घा वर्तते तथापि स्थालीपुलाकन्यायेन केषाञ्चिद् अतिविशिष्टसम्मानानां चर्चा एव क्रियते मयात्र। १९९९ तमे वर्षे कविरसौ दिल्लीसंस्कृताकादम्या संस्कृतसाहित्यसेवासम्मानेन अलंकृतः। २००९ तमे वर्षे विद्वानेष राष्ट्रपतिप्रमाणपत्रेण आजीवनपुरस्कारेण पुरस्कृतः। २०१२ तमे वर्षे कविरसौ उत्तरप्रदेशपत्रकारितासम्मानमलभत्। एवमेव २०१३ तमे वर्षे पद्मश्रीसम्मानेन आशुकविकुञ्जरसम्मानेन च सम्मानितः। २०१५ तमे वर्षे महाभागोऽसौ विद्याविभूषणपुरस्कारं प्राप्तवान्। 'जय भारतभूमे' नामास्य कृतिः उत्तरप्रदेशसंस्कृताकादम्या पुरस्कृता। अस्मिन्नेव वर्षे अनेन 'राजधानीरचनाः' इति शीर्षकेण संस्कृतकाव्यरचना कृता यस्याः कतिपयाः कविताः आंग्लभाषायां, मातृभाषायां, खडीबोली इति भाषायाञ्च पद्यरूपान्तरेण प्रकाशिताः- इत्यस्ति अस्मभ्यं सर्वेभ्यः गौरवस्य विषयः। न केवलं भारतदेशस्य विभिन्नस्थानेषु अनेन स्वकाव्यकृतीनां रसास्वादनं कारितम् अपितु विदेशेष्वपि काव्यपाठाय विद्वानसौ पौनः पुन्येन आमन्त्र्यते सम्मान्यते च।

एवमस्य विदुषः कवेः विषये यत्किञ्च कथ्यते लिख्यते वा तन्न्यूनमेव, भास्करस्य पुरतः दीपप्रदर्शनमेव, अतः अलमिति विस्तरेण अस्य सौम्यस्वभावेन, सौहार्दपूर्णव्यवहारेण मधुरकण्ठेन, संस्कृतानुरागेण वैदुष्येन च सर्वेऽपि सरलतया आकृष्यन्ते।

अन्ते अस्मै महाभागाय उत्तम-स्वास्थ्य-चिरायुष्यं प्रदातुं वारं वारं प्रार्थये कामये चाहम्, विद्वानेषः सतत-सारस्वत-आराधनायाः स्वसम्पूर्णं मङ्गलं जीवनं यापयतु इत्यस्ति मे प्रार्थना परमात्मनः चरणकमलयोः।

**ओं मङ्गलं भूयात्**
**ओं स्वस्ति भूयात्।**

●

# स्मृतिसागरतरङ्गबिन्दुः

**प्रो. राधावल्लभः त्रिपाठी**
पूर्वकुलपतिः, राष्ट्रियसंस्कृतसंस्थानम्,
नवदेहली

रमाकान्तशुक्लवर्येण सम्बद्धाः शतशः प्रसङ्गा हृदयपट्टे उट्टङ्किताः। कस्य कस्य विवरणं दीयेत, कः सङ्ग्रह्येत कः परिह्रियेत, कश्च विसर्ज्येत इति हानोपादानबुद्धिः स्मारं स्मारमस्य अलोकसामान्यमचिन्त्यहेतुकं चरितं कुण्ठिता भवति। यत्किमपि लिखामि तद् एतस्य विषये मनःसागरे काले काले शुक्लस्मृतितरङ्गणानां केषाञ्चन बिन्दूनां सङ्ग्रहणं, तेषां शब्देषु सङ्ग्रथनं च दुष्करमेव कर्म। भवतश्चात्र ममैव श्लोकौ-

**स्मृतिसिन्धौ ये केचन तरङ्गततयः समुच्छलितास्तेषु।**
**बिम्बसि बिन्दौ बिन्दावबिन्दुसुन्दर सुन्दरताबिन्दो!॥**
**मानव एकः पुञ्जः सघनः स्मृतिघनसमुच्चयैर्घटितः।**
**स्मृतिमेघानां वर्षा चीयेत कथं हन्त शब्दबिन्दौ॥**

अतिविचित्रपरम्परावाहिनः प्रख्योपाख्याप्रसरसुभगस्य साहित्यसंसारस्य ससारमपारं च वैभवं परां प्रकृष्टतामानीयते कारयित्र्या भावयित्र्या च द्विविधया प्रतिभया। उभयोः प्रतिभयोरेकस्यां व्यक्तौ समागमो नितरां दुर्लभः। विरला एव भवन्ति ते सन्तो ये काव्यानुशीलनवशाद्विशदीभूतमनोमुकुराः सहृदयत्वं विकासयन्तो यथा साहित्यस्य गम्भीरानुशीलने पाटवमाविष्कुर्वन्ति तथैव स्वरसिकतां रचनयाऽपि प्रकटीकुर्वन्ति। यदुक्तं कालिदासेन-

**कश्चिद्वाचं रचयितुमलं श्रोतुमेवापरस्तां**
**कल्याणी ते मतिरुभयथा विस्मयं नस्तनोति।**
**नह्येकस्मिन्नतिशयवतां सन्निपातो गुणाना-**
**मेकः सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्यः॥**

कविसहृदयो रमाकान्तशुक्लो वरीवर्ति एकान्तपात्रमतिशय-गुणसन्निपातसौभाग्यस्य। कविसमवायेषु अस्य मृदङ्गमांसलाः स्फीताः मेघस्तनितं ह्रेपयन्तो विकस्वराः स्वराः अनेकधा अनेकत्र गोचरतां गताः। यादृशमस्यौदार्यं,

तादृशं सौजन्यं, यादृशं च सौजन्यं तादृशमेव संस्कृतानुरागित्वम्। सर्वत्र प्रसन्नगम्भीरपदाऽस्य भारती, भारवेः कवेरेतद् वचः स्मारयति-

**भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये।**
**नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थं कतिचित् प्रकाशताम्।**

संस्कृतसेवासंलग्नः सारस्वतसाधकः सभासु प्रगल्भोऽध्यवसायसमर्थो रमायाः कान्तो रमाकान्तः धीमान् एतादृशेषु सभ्येषु सभ्यतम इति न संशीतिः। अनेन यथा साहित्यस्य गम्भीरानुशीलने पाटवमाविष्कृतं तथैव संस्कृतसेवाकर्मणां सञ्चालनेऽपि दक्षता प्रकटीकृता।

अयं सस्मितं साम्मुख्यं विदधाति विपत्तिपर्वतैः वैमुख्यं च विधत्ते व्यसनानां, अपहस्तयति सदैव मनोमालिन्यं, हस्तं गमयति सुखानि, अस्तं गमयति च विषादपुञ्जम्। अनेन सार्धं नैके ह्लादमयाः क्षणा मया नाना नगरेषु नाना कार्यक्रमेषु व्ययं गमिताः, ते स्मृतौ अव्ययाः सन्ति।

वाचा शुक्लः, वस्त्रैः शुक्लतरो मनसा शुक्लतमश्चायं सर्वशुक्लः शुक्लवर्यः संस्कृतमहाकाव्यानां संस्कृतनाटकानां च केन नायकेनोपमीयेत इति यदा विचिन्तयमि तदा महाकविशूद्रकविरचितमृच्छकटिकस्य चारुदत्तः स्मृतिमुपैति। चारुदत्त इवायम्-

**दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी**
**आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः।**
**सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदानसत्त्वो**
**ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये॥**

तथापि चारुदत्तस्य अस्य च विद्यते किमप्यन्तरम्। चारुदत्तो ब्राह्मणः सन्नपि सार्थवाहः, यद्यपि कीदृशं कथं वा वाणिज्यमसौ करोति इति न मृच्छकटिकाद् ज्ञायते। रमाकान्तशुक्लस्य सार्थे सन्ति देहल्याः अन्यप्रदेशानां वा दरिद्राः संस्कृतच्छात्रा यानसौ अन्नदानेन विद्यादानेन च चिरकालात् पोषयन् पालयंश्चास्ते।

अथ वसन्तसेना रमाकान्तशुक्लवर्यस्य जीवने कति आगता वा नागता वा आगत्य गता वा इति न निश्चित्त्याहं वेद्मि, यदि ता आसंस्तर्हि अस्य सुभगस्य सौभाग्यं स्वविरहावस्थया व्यञ्जयन्त्यस्ताः कुत्र सम्प्रति

विलीना इत्यपि न वेद्मि। परन्त्वयं सद्गृहस्थः मार्कण्डेयपुराणप्रोक्तं भगवतो व्यासस्येदं वचनं सर्वथा असुसरति-

**भर्तव्या रक्षितव्या च भार्या हि पतिना सदा।**
**धर्मार्थकामसंसिद्ध्यै भार्या भर्तृसहायिनी।।**
**यदा भार्या च भर्ता च परस्परवशानुगौ।**
**तदा धर्मार्थकामानां त्रयाणामपि सङ्गतम्।।**
**कथं भार्यामृते धर्ममर्थं वा पुरुषः प्रभो।**
**प्राप्नोति काममथवा तस्यां त्रितयमाहितम्।।**
**तथैव भर्तारमृते भार्या धर्मादिसाधने।**
**न समर्था त्रिवर्गोऽयं दाम्पत्यं समुपाश्रितः।।**

मार्कण्डेयपुराणे-२१.६८.७२

इत्थमनेन त्रिवर्गः साधितः। स्वकीया धर्मदाराः आराधिताः, ताभिश्च स्वयमपि साधु समाराधितः। अयं तासां वशङ्गतस्ता वाऽस्य वशङ्गता इति निर्णयः कर्तुं न शक्यते। सर्वथा चारुदत्तस्यैव भार्या धूता इव सन्ति अवधूतसदृश्यः अवधूतमनस्तापाः विधूततमस्काश्चास्माकं भ्रातृजायाः रमादेव्यो याः समुपस्थितेषु सङ्कटाक्षणेषु दायं दायं द्रव्यम् अस्य विपत्तिमपाहरन्। अस्य संस्कृतसेवाकार्यकल्पद्रुमाणां ताः स्तम्भभूताः, एतस्य असाधारण-सारस्वतसाधनावल्लरीणां ता एव मूलम्, शालिवाहनस्येवास्य शस्यशालितायां ता एव स्तम्बकरितां कुर्वाणाः राजन्ते।

अयं १९७९वर्षादारभ्य अर्वाचीनसंस्कृतमिति अद्वितीयां पत्रिकां सुसम्पाद्य प्रकाशयितुमारब्धवान्। अस्याः पत्रिकायाः कीर्तिः प्रसरन्ती सागरं प्राप्य मत्कर्णौ प्रागेवास्पृशत्। एकदा सागरे साम्प्रतिकसंस्कृतसाहित्यमधिकृत्य चर्चा प्रचलति स्म। गुरुवर्यैरुपाध्यायैः प्रसन्नवदनैरुक्तम्- इदानीं दिल्लीतः आधुनिकसंस्कृतसाहित्यविषय एव त्रैमासिकी पत्रिका प्रारब्धा। तदानीं कः खलु अवार्चीनसंस्कृतपत्रिकायाः सम्पादकः इति नाजानाम्। परस्ताच्च पत्रिकां पत्रिकासम्पादकं च साक्षात्कृत्योभयोसम्पाद्यसम्पादकभावसम्बन्धमवागच्छम्।

शुक्लवर्यो नाना रूपेषु मया दृष्टः। अस्य उदात्तता, गम्भीरता, भव्यता साक्षात्कृता। अस्य बहूनि गुह्यानि च चरित्राणि ज्ञातानि। सौहार्दस्य

काऽपि काष्ठा एतस्य गृहान् गत्वा गत्वा अनुभूता। सा च विद्युल्लतायामित्थमवर्णि वर्णिवरेण्येन पूर्णसरस्वतीवर्येण-

**दर्शितानि कलत्राणि गेहे भुक्तमशङ्कितम्।**
**कथितानि रहस्यानि सौहार्दं किमतः परम्॥**

ऐदम्प्राथम्येनास्य दर्शनं मयोज्जयिन्यां कालिदासमहोत्सवे प्रायशश्चत्वारिंशद्भ्योऽब्देभ्यः प्राक् कृतं स्यात्। अयं तदानीं वपुः प्रकर्षात् समग्रायां विद्वन्मण्डल्यां पृथक् परिचीयमानः समेषां विशिष्य युवतीनामाकर्षणकेन्द्रं 'युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरो'ऽदृश्यत। अस्य तदानीन्तनीं छविल्लतां चिरण्टीसमाजसञ्चारचातुरीं स्मारं स्मारं सम्प्रति वृद्धानामपि अस्मादृशां स्मरशरस्पर्शाभासानुभावि क्वचिन्मनो भवेत्। तदानीमेनमुद्दिश्य एकदा मया भास्कराचार्यत्रिपाठी उक्तः-'अयं वृषायमाणो बम्भ्रमीती'ति। भास्कराचार्यत्रिपाठिना मदुक्तस्य वाक्यस्य व्याकरणव्युत्पत्त्यादिमीमांसां मनसि कृत्वा 'अहा अहा' इति द्विरुक्तम्। अनन्तरं च मदुक्तवाक्यं सकृदुच्चार्य कण्ठाग्रीकृतम्। परस्ताच्च राधावल्लभजिः भवन्तमुद्दिश्य एवमेवं कथयतीति मदुपस्थितावेव मदुक्तं वाक्यं शुक्लवर्यस्य पुर उदारितम्। अयं शान्तेन मनसा श्रुतवान्। मौनं चालम्ब्य तस्थौ। मया स्पष्टीकरणमुद्रायामुक्तम्-'पश्यतु भवान्। वृषायमाणः इति ऋग्वेदे इन्द्रस्य विशेषणम्। अतो इन्द्रेण मया भवानुपमितः।' अयं तथात्वेऽपि तूष्णीं स्थितः।

अहं राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिरासम्। कुलसचिवकार्यधुरं वहति स्म रामानुजदेवनाथवर्यः। स राजस्थानेषु जयपुरस्थरामानन्दसंस्कृतविश्वविद्यालयस्य कुलपतित्वेन नियुक्तिं प्राप्य दिल्लीं विहाय जयपुरं प्रयाति स्म। संस्थानस्य सारस्वतसभागारे तस्य विदायो भवति स्म। शुक्लवर्यस्तु तेषु दिनेषु संस्थानस्याङ्गमिव आदिवसं तत्र एकस्मिन् कक्षे उपविश्य संस्कृतपत्रिका-सन्दर्भसूचीनिर्माणशोधयोजनाकर्मणि लग्नोऽभूत्। संस्थानस्य सर्वेषु आयोजनेषु तस्य उपस्थितिः स्वर्णे सुगन्धमुत्पादयति स्म। अस्तु, देवनाथवर्यस्य विदायप्रसङ्गे भाषमाणोऽसौ सज्जनलक्षणपरकं रमणीयं कमपि श्लोकमुदाजहार। तस्मिंश्च श्लोके रतिः स्वीयभार्यायामिति उक्तम्। शुक्लवर्यो ब्रूते स्म- पश्यन्तु भवन्तः स्वभार्यायां रतिरिति उक्तम् अत्र एवकारो नास्ति, स्वभार्यामेव रतिर्भवेदिति तु

नोक्तम् । काममन्यत्रापि रतिर्भवेत् किन्तु स्वभार्यायां रतिरवश्यं भवेत्। इति । मया परिहासपरायणतया मध्ये निवार्य स उक्तः-मन्ये अत्र तु अत्र भवान् स्वजीवनस्यानुभवं विवृणुते इति। श्रुत्वा विज्ञाः स्मयन्ते स्म, परे प्रहसन्ति स्म, अल्पज्ञाः अट्टहसन्ति स्म। शुक्लवर्यः गम्भीर एव तिष्ठन् स्ववक्तव्यमग्रे सारयन्नास। अनन्तरमन्यैरपि वक्तृभिर्मदुक्तिमुदाहृत्य शुक्लवर्यं प्रति कटाक्षक्षेपो व्यधायि। शुक्लवर्यस्तथैव गम्भीरमुद्रायामतिष्ठत्।

अयमानन्दमूर्तिः। सदैव प्रफुल्लहृदयो दृष्टः। अस्याधरोष्ठयोः मधुरं स्मितं सदैव चिक्रीडति। अस्य विनोदगर्भितां व्यङ्ग्यमयीं वाणी कतिधा न नः अहासयत् स्माययद् विस्मापयच्च। कति वारम् अस्य हृदयमर्मसु गुद्गुदं कुर्वन्ति वाक्यादि श्रावं श्रावं वयमट्टहसिताः। परमयं स्वयं अट्टहासं कुर्वाणः श्रुतो वा दृष्टो वेति न स्मरामि।

पुनरपि प्रायशः पञ्चत्रिंशदब्दपूर्ववर्तिनं कालं स्मरामि। पटियाला-विश्वविद्यालयस्य कश्चन प्राध्यापकः कालिदासमहोत्सवे प्राय आयाति स्म। स पीएच्.डीत्युपाध्यर्थं शोधकार्यं पूरयितुं न शशाक, स्वशोधविषये मुहुर्मुहुश्चर्चां करोति, स्वकीयां वेदनां व्यनक्ति, अयथा तथा बहु भाषते च। केनचित् सविनोदमसावुक्तः- अरे भवानेतावान् महान् विद्वान् यत् पीएच.डी.इत्येनम् उपाधिं तु विक्रमविश्वविद्यालयः ससम्मानं मानरूपेण प्रदित्सति भवते, तदर्थं प्रस्तावोऽपि स्थापितो वर्तते इति श्रुत्वा आकाश इव डयमानः मनोरथानां वात्याचक्रेण क्षिप्यमाण स विद्वान् एवं सविनोदमुदीरितं मिथ्यावादं भूतार्थतया गृहीत्वा अथ कदा विक्रमविश्वविद्यालयो मह्यं मानदोपाधिं दास्यति, कदा दीक्षान्तमहोत्सव आयोजयिष्यते इति दयनीयताया विग्रह इव यं वा कं वा यत्र वा तत्र वा पृच्छति, आत्मानं भूयोप्युपहासतां नयति। प्रतिवर्षं यदा यदा उज्जयिनीमायाति तदा तदा विश्वविद्यालयसम्बद्धान् जनान् पृच्छति -मम मानदशोधोपाधिप्रदानस्य का वार्ता? ये केचन एनं मिलन्ति ते सर्वे सकौतुकं मानदशोधोपाधिप्रदानप्रकरणं मिथ्यावार्तालवणमरीचिभिः सम्मिश्रय व्यामिश्रैर्वचोभिरेनम् अधिकतरं व्याक्षिप्तचित्तं विदधति। परिहासोप-हासाट्टहाससमन्वितममन्दानन्दसन्दोहे ससुखं उन्मज्जन्ति निमज्जन्ति च । तस्य च मानदशोधोपाधिप्राप्तये ताम्यतो विदुषः क्षते क्षारमिव तदा जातं यदा

विश्वविद्यालयस्य कश्च कर्मचारी अस्मिन् विनोदनाटके कपटप्रस्तावनामारभ-माणस्तमाह- भवान् एकलक्षरूप्यकाणि मह्यं ददातु, ये कार्यालयजनाः भवतां मानदोपाधिवितरणपञ्जिकानामुपरि सुप्यन्ति तेषां भागं दत्वा अहं पञ्जिकाम् अग्रे सारयामि। स च विद्वान् श्रुत्वेदं समधिकतरं विक्षिप्त इव अरे अहं निधनः प्राध्यापकः कुत आनयामि लक्षरूप्यकाणि, यदि द्वि-त्रिसहस्रस्य वार्ता स्यात्तर्हि प्रबन्धं कुर्याम् आशयमविज्ञाय पुरोभागिनां प्रपन्नः पप्रच्छ। अहो अहो कीदृशो भ्रष्टाचारः मानद उपाधिर्दीयते, तस्य कृते एकलक्षरूप्यकाणि याच्यन्ते इति इतस्ततो गच्छन् कदाचिन्मां कदाचिदन्यांश्च श्रावयति स्वकीयां दुःखमहागाथाम्।

शुक्लवर्यस्तु कालिदासमहोत्सवसमागतविद्वन्मण्डल्यां सर्वत्र नेत्रतारायते स्म। स महाविद्वान् अस्य नेत्रातिथिर्न भवेदिति तु कथं सम्भाव्येत?अत एकदा शुक्लवर्यस्तेन सह विनोदपटीं पटुतया प्रसारयन् मया दृष्टः। शुक्लस्य अन्तर्विनोदगर्भां सहानुभूतिमयीं वचनावलिं निशम्य स विद्वान् रोरुद्यमान इव स्वशोधकार्याणां विवरणं ददाति स्म तस्मै। मया संस्कृतेऽपि एतत् एतल्लिखितमिति यदा तेन विदुषोक्तं तदा दयालुतया अयमेनमाह-एतत् एतत् भवान् मत्कृते प्रेषयतु, अर्वाचीनसंस्कृतसाहित्ये प्रकाशयिष्यामि। भवद्भिः सह अस्माकं सम्बन्धो घटेत यतो हि भवान् गौर्वाहीकः। स महाविद्वान् किमाह किमाह भवानिति अस्य वचनस्य शुक्लवर्यः प्राह- डाक्टरसाहब, अहमेतदेव कथयामि यदहमपि पञ्जाबवास्तव्यो भवानपि...... अतो भवानस्माकं बन्धुः।

अस्य भोजनभट्टतामधिकृत्य नाना किंवदन्त्यः स्यदन्ते स्म मित्रगोष्ठीषु विद्वन्मण्डलीषु वा। तासु एकः प्रसङ्गः इच्छारामद्विवेदिनो मुखादेवं श्रुतचरः। मध्यप्रदेशसंस्कृताकादेम्या काऽपि सङ्गोष्ठी अमरकण्टके भवति स्म। मध्याह्नकाले अमरकण्टकभ्रमणाय द्विवेदिवर्येण सह शुक्लवर्यो आवासाद् विनिर्गतः। मार्गे एकस्य भोजनालयस्य बहिः सूचनापट्टके लिखितमासीत्- सप्तभिः रूप्यकैः उदरपूरं भोजनम् इति। शुक्लवर्य आह-इच्छाराम, सर्वनाशः कृतः स्वस्य अनेन भोजनालयस्वामिना एवं लेखापयित्वा। अत एव अनूचानाः उचितमाहुः- शतं वद, मा लिख इति। एहि अन्तः प्रविशावः, अस्य

भोजनालयस्वामिनः यादृशीं वा तादृशीं वा गतिं च करवाव:।

एवं प्रतिज्ञावाक्यमुक्त्वा शुक्लवर्यो द्विवेदिवर्येण समं भोजनालयं प्रविवेश। तत्र परिवेषक आसीत् कश्चित् अष्टवर्षकल्पो बालकः । शुक्लवर्यस्तमाहूय एकस्य रूप्यकस्य कर्गदमुद्रां तस्य करे अर्पयित्वा अवादीत्-वत्स, अस्माकं स्थाली रिक्ता न तिष्ठेदिति अवधेयम्। इति। अथ संयोजिते द्वे स्थाल्यौ। अनन्तरं च भोजनालयस्य रन्धनकक्षात् धावं धावं स बालकः उष्णाः प्रफुल्लाः रोटिका आनयति, शुक्लवर्यश्च प्रायश एकेन ग्रासेन एकामेकां रोटिकां कवलीकरोति। अन्ये ये ग्राहकास्तस्मिन् भोजनालये भुञ्जाना आसंस्ते चक्षूंषि विस्फार्य विलोकयन्ति, कुतो रोटिका आयान्ति कुत्र च विलीना भवन्तीति न ज्ञातुं पारयन्ति। भोजनालयस्वामी अपि चकितचकितः पश्यति। एवं द्विपञ्चाशद् रोटिकाः एकलेन शुक्लवर्येण तदानीं कवलीकृताः, नवीन इतिहासश्च विरचितः।

अथ समाप्य भोजनविधिं सम्पाद्य आचमनं शुक्लवर्यः प्रतिभुक्तिं विधातुं भोजनालयस्वामिन आसन्दिकां प्राप, शतरूप्यकाणां कर्गलमुद्रां च तस्मा अर्पयन्नाह-शाहजि, अन्यथा मा गृह्णातु। आवाभ्यां भवतां महती हानिः कृता स्यात्। एतानि शतं रूप्यकाणि सन्ति। यावदीप्सितं तावन् निकृन्ततु शिष्टं च राशिं मे ददातु। भोजनालयस्वामी प्राह- बाबूजि, अस्माकं भोजनालये सर्वविधाः ग्राहकाः आयान्ति। यथा प्रतिग्राहकमहं सप्तरूप्यकाणि एकस्य भोजनस्य गृह्णामि तथा भवद्भ्योऽपि गृह्णीयाम्, कोऽत्र विशेष इति। नैकधा मया शुक्लवर्यस्य शुक्लं चरितं प्रत्यक्षीकृतम्, अयं विनोदपटुः परिहासे व उपहासे वाऽपि नदीष्णः, परन्तु महानुभावतां न कदापि जहाति। प्रतिवेशिषु परोपकारित्वं संस्कृतच्छात्रेषु कारुण्यं चास्य सर्वदा विलोकितम्। अथ १९७८-तमं वर्षं परितो घटितं प्रसङ्गमेकं स्मरामि। अयमेकस्मिन् दिने सहसा सागरं समागतो मदीये गृहे च प्रकटीभूतः। अनेन सह आसीत् देहल्यामस्य कश्चन मया सह कामपि प्रयोजनवार्तां विधाय प्रस्थानवेलायामयमाचार्यबच्चूलालावस्थिनां गृहसंकेतमपृच्छत्। मया सूचितेन सङ्केतेन शुक्लवर्यः स्वदेहलीमित्रेण सह अवस्थिवर्यस्य गृहं प्राप्तः। होरानन्तरं पुनश्च मम गृहं समायातः। आगत्य च मां पृष्टवान् अपि नाम अवस्थिवर्याणाम् आर्थिकी दशा न वर्तते साध्वीति?

यतो हि 'सेवानिवृत्तोऽहं भवतां सत्कारं कर्तुं न पारयामि, केवलं भवते जलमेवार्पयितुं शक्तोऽस्मि न तु अशनीयं किञ्चित्' इति ते उक्तवन्तः।

अवस्थिवर्यस्य निःस्वता मया विदिताऽभूत्। सेवानिवृत्त्यनन्तरं स अर्थाभावेन सर्वथा ताम्यति स्म। चतस्रस्तस्य दुहितरः चत्वारश्च पुत्राः। दुहितृषु एकैव विवाहिता, पुत्रास्तु सर्वे अधीयाना एव। वेतनमिदानीं न लभ्यते, न वा पेंशनम्। ऋणं गृहीत्वा गृहीत्वा कथञ्चित् आहारव्यवस्था तस्य गृहे भवति।

मया शुक्लवर्यः सङ्क्षेपेण भूतार्थं निवेदितः। एतादृशो महापण्डितः मनस्वी च एतादृश्यां विपन्नावस्थायां वर्तत इति विज्ञाय क्षणं विचारमग्नोऽसावतिष्ठत्। अनन्तरमाह- मया अवस्थिवर्यस्यैका कविता प्रकाशनाय गृहीता इदानीमेव। एवं तर्हि करोमि, अवस्थिवर्यस्य गृहं पुनरपि यामि। या कविता भवतां मया प्रकाश्यते तस्य मानदेयत्वेन कानिचिद्रूप्यकाणि स्वीकरोतु इदानीमेव, तेन धनादेशेन राशेः प्रेषणस्य मम आयासः न स्यादिति कथयामि। अपि नाम एवं कथनेन अवस्थिवर्यः धनराशिं स्वीकुर्यात्? मयोक्तम्-'उदारः कल्पः'।

शुक्लवर्यः अवस्थिवर्यस्य गृहात् साक्षात् स्थेषणं यास्याव आवामित्युक्त्वा आपृच्छ्य मां पुनरपि अवस्थिवर्यस्य गृहं प्रति प्रतस्थे। परस्तात् किमभवदिति मया तस्मात् काऽपि वार्ता नावापि। अतीतेषु द्वित्रिदिनेषु अहं अवस्थिवर्यं मिलितुं तदीयगृहं गतवान्। वार्तालापप्रसङ्गेन स कथयति स्म-संस्कृतपत्रिका अपि मानदेयं ददति इति सुखदं वृत्तम्। रमाकान्तशुक्लः पूर्वेद्युरिहागतः। मया तस्मै तस्य पत्रिकायां प्रकाशनाय संस्कृतकविता दत्ता। स मानदेयधनं इदानीमेव गृह्णन्तु इति सानुरोधं मह्यं किञ्चिद् धनं ददौ। तेन धनेन द्वित्रिदिनानि तु भोजनादिव्यवस्था अस्मिन् गृहे जाता।......

हालैंडदेशे विश्वसंस्कृतसम्मेलनमायोज्यते स्म। अपि नाम देववाणीपरिषद् विश्वसंस्कृतसम्मेलने लाइडननगरं गन्तुं मह्यं किमपि अनुदानं दद्याद्-इति कस्मिंश्चित् कार्यक्रमे सागरं समागतः शुक्लवर्यो मया पृष्टः। सोऽवादीत्-भवान् शतं रूप्यकाणि दत्त्वा प्रथमं देववाणीपरिषदः सदस्यतां गृह्णातु, सदस्यः सन् अनुदानाय मह्यमावेदनं ददातु, अहं भवते यात्रानुदानं

दद्याम्। मया शतं रूप्यकाणि दत्तानि, सदस्यताप्रपत्रं पूरितम्, शुक्लवर्येण तत्कालं चैकं चेकपत्रं मह्यं दत्तम् अष्टसहस्ररूप्यकाणाम्।

देववाणीपरिषच्चास्ते रमाकान्तशुक्लपर्याया। अनन्ताः प्रसङ्गा एवंविधाः सन्ति। भगवतो रमाकान्तस्यैव रमाकान्तशुक्लस्य अनवधारणीयं वरीवर्ति ईदृक्तया इयत्तया वा सौजन्यं शीलं गुणगणश्च।

**श्रीशुक्लस्मृतिसागरादुपचिताद् द्वित्रा मया बिन्दवः**
**आत्ता, अञ्जलिरेक एष घटितश्चैवार्पितः सादरम्।**
**स्वल्पं यल्लिखितं बृहत् खलु भवेत् पुङ्खानुपुङ्खं पुन-**
**र्ह्रोका वै लहरी परां प्रजनयेत् क्षिप्ते यथा प्रस्तरे॥**

# प्रथमं दर्शनं कवेः

डॉ. रामविनयसिंहः
एसोसिएट प्रोफेसर, संस्कृत विभाग,
डी०ए०वी० (पी०जी०) कॉलेज, देहरादून।

स्मारं स्मारं मोमुदीति मन्मनः महाकालपुर्य्याः कविकुलगुरोः कालिदासस्य नगर्य्याः तद्दिनं यदा पञ्चनवत्यधिकैकोनविंशतितमे वर्षे (१९९५ तमे वर्षे) काशीतः काशीहिन्दूविश्वविद्यालयपक्षतः उज्जयिन्यां समायोजिते कालिदाससमारोहे सङ्कल्पितायामखिलभारतीयान्तर्विश्वविद्यालयीय-संस्कृतवादविवादस्पर्द्धायां प्रतिभागं ग्रहीतुं गतवानासम्। वाद-विवादस्पर्द्धायां विपक्षमाश्रित्य मदीयं स्वपक्षोपस्थापनमासीत्। तत्र स्पर्द्धायां त्रिषु निर्णायकेष्वासीदेको विलक्षणो मनीषी येषां दर्शनमेवाप्य मनो मे भूयो समुत्कण्ठितमभवत्। प्रतियोगितायाः पश्चाद् यदा ज्ञातं यन्निर्णायकेषु योऽन्यतमो दिव्यो विराट्पुरुषः स एव महाकविः डॉ. रमाकान्त शुक्लः। निर्निमेषनेत्राभ्यां तेषां राष्ट्रकवीनां प्रथमं दर्शनमकारि मया। तद्धि प्रथमं दर्शनमद्यापि हृदि प्रसादं जनयति। एतेषां सुरभारतीसमाराधकानां भाति मे भारतमिति काव्यं तदानीं संस्कृतकवीनां मध्ये भूयो प्रशंसितमासीत्। यदा ते श्रावयन्ति स्म तदा बहवोऽन्ये कवयः तेषां पाठस्वरैः स्वरमेलनं कुर्वन्ति स्म। राष्ट्रियकवितायाः ताः लहरिकाः सम्प्राप्य भावस्नाताः जना आत्मानमपि विस्मरन्ति स्म। मत्कृतेऽपि सोऽनुभवः सर्वथाभिनव एवासीत्।

प्रतियोगितास्थानाद् विक्रमकीर्तिमन्दिरादागत्य गुरुवर्याणामेतेषां सम्यग्दर्शनं विक्रमातिथिगृहे भोजनालये जातम्। प्रतियोगितायां मदीयमुपस्थापनं प्रशस्यं जातम्। मया रजतपदकेन द्वितीयः पुरस्कारः लब्धः। मदुपस्थापनकौशलं विज्ञाय पूज्यैः डॉ. शुक्लमहोदयैः भोजनालये दृष्ट्वैवोक्तं हिन्द्याम्- 'अरे सिंह साहब, आपने तो कमाल कर दिया।' वाक्यमिदं श्रुत्वैव मया श्रद्धया चरणस्पर्शो विहितः। गुरुवर्यैः स्निग्धहस्तेनाशीराशयोऽपि मम शिरसि प्रासारिषत। मत्कृते तत्क्षणं विलक्षणमेवासीत्। सर्वथा विस्मायिकम्।

अनन्तरं रात्रावतिथिगृहस्य द्वितीयतलस्यैकस्मिन् कक्षे कविगोष्ठी समायोजिता आसीत्। तत्र बहवः कवयः काव्यपाठार्थमागता आसन्। तत्रैवाधो भोजनस्थाने काव्यपाठस्वरं श्रुत्वा स्वभावत एवाकर्षितस्सन्नहमपि तत्रागच्छम्। तत्र डॉ. राजेन्द्रमिश्र-डॉ. कपिलदेव द्विवेदि-डॉ. शिवदत्तशर्मचतुर्वेद-डॉ. भास्कराचार्यत्रिपाठि-डॉ. पुष्पादीक्षित-डॉ. इच्छारामद्विवेदि-डॉ. मनुलताशर्मप्रभृतयः नैके कवयः कवयित्र्यश्च समवेताः आसन्। अहमपि तत्र स्थानं सम्प्राप्यातिष्ठम्। कविवरेण्यैः डॉ० कपिलदेवपाण्डेयमहोदयैः मम परिचयः प्रदत्तः। तत्र कविसम्मेलनं संस्कृतहिन्दीभाषयोरासीत्। तस्य संचालनं सरसकविभिः डॉ. इच्छाराम द्विवेदिमहोदयैः कृतमासीत्। मदीयं हिन्दीकाव्यं गज्जलिकाश्च श्रुत्वा कविभिः मत्कृते भूयांस्याशीर्वचांसि प्रादायिषत। तस्मिन्नेव कविसम्मेलने कवित्वदृष्ट्या मम परिचयः डॉ. रमाकान्तशुक्लमहोदयैस्सह तथा च डॉ. इच्छाराम द्विवेदिमहोदयैस्सह जातः। स एव परिचयः कालान्तरे स्नेहतन्तुभूतो जातः। अस्ति मे परमं सौभाग्यं यत् श्रीमतां रमाकान्तशुक्लमहाभागानां विषये किञ्चिन्मनोभावाभिव्यञ्जनं कर्त्तुमुत्सहे। इदमपि मत्कृते नितरामाह्लादकरं यन्मदीया प्रथमा काव्यसङ्कलना 'शाश्वती'त्याख्या शुक्लमहाभागानामेव देववाणी परिषद् द्वारा प्रकाशिता। विविधेषु काव्यमञ्चेषु गुरुवर्यैस्सह काव्यपाठस्य सौभाग्यमपि मया सम्प्राप्तमिति मत्कृते महत्सुखकरम्।

पूज्यानां डॉ. शुक्लमहाभागानां काव्यपाठकौशलं सहसैव चेतो हरति समेषाम्। न केवलं मानवानामपितु प्रस्तराणामपि हृदि कविमूर्द्धन्यानामेतेषां ह्लादिनी वाणी जागरां जनयितुं सक्षमा। संस्कृतवाङ्मयसंरक्षणार्थमेतेषां कविधौरेयाणां यदस्त्यवदानं तन्महार्घमेव। इदानीमपीमे सुकवयः स्वकीयाभिः काव्यझरीभिः सहृदयहृदयेषु पीयूषसेचनं कुर्वन्तीति नात्र सन्देहलवोऽस्ति। सर्वदाहं कामये यदेते महाकवयः सर्वथा निरामयाः सन्तः संस्कृतमातुः सेवायां सन्नद्धाः तिष्ठन्तु त्र्यायुष्यञ्च सम्प्राप्य राष्ट्रभावनासंवलितकाव्यैः राष्ट्राराधनं कुर्वन्त्विति सश्रद्धभावनया नौमि-

**ओजोभावविभा विभाति नितरां येषां सुधावाचि वै**
**स्नेहासाररसाभिवर्षणमहो नित्यं हृदं सिञ्चति।**
**काव्यं राष्ट्रसमर्चने विलसति प्रायो युगीनं शुभं**
**तेषां शुक्लकलावतारवपुषामिद्धा नतिः पादयोः॥**

# कविः शुक्लो रमाकान्तः

**प्रो. भागीरथिनन्दः**
साहित्य-संस्कृतिसङ्कायप्रमुखः
श्रीलालबहादुरशास्त्रिराष्ट्रिय-संस्कृतविद्यापीठम्, नवदेहली

तस्मिन् दिने सागरविश्वविद्यालयसंस्कृतविभागानुकूल्येन मध्यप्रदेश-संस्कृताकादमीद्वाराऽऽयोजिते नवोदितप्रतिभासमागममहोत्सवे द्वितीयदिवसेऽपराह्ने कविसम्मेलने तं स्वकाव्यपाठं कुर्वन्तमवलोक्य चकितचकितोऽहं तदानीन्तनः तत्रत्यसंस्कृतविभागीयः शोधच्छात्रस्तत्कालविगलितपरिमितप्रमातृभावं परं प्रमोदं प्राप्नुवम्। छात्रत्वेन केनापि कार्यसम्पादनव्याजेन क्वापि गत्वा किञ्चिद्विलम्बेन सम्मेलनसदनप्रविष्टस्य मे तत्काव्यापाठात्पूर्वं तत्परिचयादिप्रकाशनकारणात् तदभिधानप्रौढिवास्तव्यतादिज्ञानविरहितस्य तद्विषयकजिज्ञासैव तत्काव्यपाठपूर्तेः समन्तन्तरमुदियाय मनसि। यद्यपि पण्डिताः स्वप्रकर्षपरिचयं स्वयमेव स्वौजसा प्रस्तुवन्ति, तथापि नामगोत्रजनपदादिज्ञानाय कुतूहलिनो भवन्तीतर इति सेयं दशा ममापि तदानीम्। समग्रां परिषदं स्तम्भयन्निव, प्रवरान् प्रमोदयन्निव, अवराननुकारयन्निव, कविमण्डलीं प्रसादयन्निव, अनुपस्थितान् काव्यास्वाद-वञ्चितान् सम्पादयन्निव च यदा स मञ्चादवरुरोह तदा सकलेऽपि सदने जुगुञ्ज परस्परं कर्णाकर्णिकाध्वनिस्तद्गुणचर्चारङ्गरञ्जितः। अहमप्याकण्ठ-परिपीततत्काव्यामृतो महत्या जिज्ञासया कोऽयमिति, कुतोऽयमिति, कीदृशोऽयमिति चान्तिकोपविष्टं सहपाठिनं सीतारामद्विवेदिनं सोत्कण्ठमपृच्छम्। सोऽपि युवकविः सीतारामः स्वोत्तरे किञ्चिदिव कवित्वं योजयन् मृदुमसृणया गिरा- अयं देहलीवास्तव्यः कविशार्दूलः भाति मे भारतमित्यादिनैक-काव्यरचयिताऽप्रतिमकाव्यगायनकुशलो रमाकान्तशुक्लः। सोऽसौ विशालवपुरपि सूक्ष्मार्थदर्शी, आयतहृदयस्थलोऽपि सहृदयहृदयोत्कर्षी, प्रवरजन-परिवारितोऽप्यवरदृष्टिः, असंस्कृतकेशोऽपि संस्कृतादरः, सदैव स्मेराननो बालानां वृद्धानां च प्रियः इति शनैरभ्यधात्। कविसम्मेलनात् पूर्वं नैकधा तेन सह

पानभोजनविचरणालापादिषु मिलितोऽप्यहं नाभवं तत्सम्मुखीनः सकृदपि किमपि कारणाभावात्, स्वपरिचयप्रस्तावनाभिमानविकित्सया वा। एवमेव समारोहसम्पूर्त्तेः परेद्युः विभागो नः पूर्ववत् सञ्चचाल। किन्तु विभागेऽस्माकं किमपि किमपि सामान्यो वा विशिष्टो वा विद्वत्समागममहोत्सवो मासे वा पक्षे वाऽनियतव्यवधनेनायोज्यते यतोहि तदानीन्तनविभागाध्यक्षा आचार्यराधावल्लभत्रिपाठिन आसन्नुत्सवप्रियाः। अतस्तेषां प्रसादात् विद्वद्भिः कविभिः, समीक्षकैश्च तदा तदा परिचयोऽस्माकं विभागीयच्छात्राणां सम्भवति। अयमपि शुक्लवर्यो विभागाध्यक्षाणां स्नेहातिरेकाकर्षणाद् वर्षे सम्मेलनादिव्याजेन त्रिचतुर्वारमवश्यमेवायाति संस्कृतविभागे। तदानीमेवैतेन सह पुनः पुनर्मिलनादभवदावयोः परिचयो गाढः, अहमपि तेन स्वस्वाभाविकस्नेहस्य पात्रीकृतः। उच्यते, बन्धनेषु स्नेहबन्धो निबिडतमः। शुक्लवर्यस्य स्नेहपाशेन सकृदाबद्धो न मुच्यते भूयोऽपि प्रयतमानः कश्चिदिति स्वानुभवादिदं वक्तुं नाहं कुण्ठे। देहलीवास्तव्योऽसौ परिवारपरम्परात एवाधिगतसंस्कृत-सागरावगाहनकौशलः देहलीस्थराजधानीमहाविद्यालये हिन्दीविभागे आचार्यत्वेन सम्पादिताध्यापनसेवो देववाणीपरिषदिति संस्कृतसंरक्षणप्रचारणप्रकाशनादिपरं संस्थानं सञ्चालयन् बहुवर्षेभ्य आस्ते। सागरविश्वविद्यालये शोधच्छात्रत्वेनावस्थानात् परमध्यापकरूपेण देहल्युपकण्ठे पलवलमण्डलान्तर्गत-बघौलास्थहरियाणासंस्कृतविद्यापीठे नियुक्तस्तत ई.वी. २००४ वर्षे देहलीस्थश्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठे प्रवाचकपदमधिष्ठितोऽहं संनिकृष्टतरतया नानास्थलेषु नानासमवायेषु च तस्य सङ्गतिमलभे। गुणिनो गुणज्ञो महीयतेतराम् इतीदं वाक्यं येषु कतिपयेषु ईर्ष्यासूयापरश्रीकातर्यादिमयेऽस्मिन् संसारेऽन्वर्थतां धत्ते, तेषु सुतरामन्यतमोऽयं शुक्लवर्यः इति मे मतिः, कविगोष्ठीषु, काव्यपाठसम्मेलनेषु, सङ्गोष्ठीषु, प्रतिस्पर्धादिषु न जाने, स सहजस्नेहवान् भवति मयि। कतिपयस्थलेष्वपि प्रस्तुतिं मे भृशं समर्थयन् मत्पक्षमाश्रित्य वाचोयुक्तिमपि प्रस्तौति। छन्दोविधानशास्त्रेऽप्रतिभटवेत्तासौ सहजकाव्यरचनारतिः 'भाति मे भारतम्' इत्यादीन्यविनश्वरकाव्यानि समाजायोपायनीकृत्य जयति सुतराम्। देववाणीपरिषदानुकूल्येन कविसमवायान्, पण्डितराजसङ्गोष्ठीः, सम्मेलनादीनि समायोज्य संस्कृतनीराजनानैरन्तर्यं विधत्ते। प्रतिवर्षं पण्डितराज-

सम्मानोपायनीकरणमस्य संस्कृताय समर्पणोदाहरणं प्रकृष्टम्। शुक्लवर्योऽसौ सुप्रज्ञः कविः, सुयोग्यः प्रकाशकः, सूक्ष्मेक्षिकः समीक्षकः, समर्पणाहितः अध्यापकः, परगुणपरमाणुपर्वतीकरणहृदयः सुखेन प्रेम्णा च जीवनं यापयन् कश्चन सदा हृष्टो मानवविशेषः। महोदयेनानेन सह मया कतिपयाः यात्रा अपि कृता रेलयानेन, विमानेन च। विशेषतो यात्रावधावस्मत्कुक्षिपूर्त्तौ यत्नवान् भवत्यसौ स्ववात्सल्यं प्रमाणयन्। अहं स्पष्टं स्मरामि यत् पञ्चवर्षेभ्यः पूर्वं कस्मिँश्चित्कार्यक्रमे त्रिशूरं प्रति विमानद्वारेण गच्छद्भिरस्माभिः सह गच्छतस्तस्य स्यूते चणकानि, अमरुदफलानि च प्रचुरमात्रयाऽऽसन्। मामपि रहस्यसूचयत्- 'नन्द! जायमानायां स्तोकमात्रायामपि क्षुधायां चिन्तां न कर्तुमर्हति भवान्। खाद्यमस्ति मे प्रचुरं स्यूते संनिहितम्।' कुज्झटिकावलयितवायुमण्डले अदृश्यताहेतोः जाते विलम्बे किञ्चिदुदरसेवापेक्षायां सर्वैरस्माभिर्मिलितैश्च ततस्ततः किञ्चित् किञ्चित् सानन्दं साधिकारं चास्वादितम्। स्मरामि यत् सहास्माभिर्यात्रां कुर्वन् आचार्याभिराजराजेन्द्रमिश्रोऽपि 'डाक्टरसाहब! इदं सर्वं भवदीयमपि, माऽस्तु सङ्कोचः' इति शुक्लपादाऽऽग्रहमपाकर्तुं न शशाक तदानीम्। प्रत्यावर्तनसमयेऽपि शुक्लमहोदयोऽस्मत्कल्याणाय त्रिशूरविमानपत्तनात् समोसाः,फलानि, मिष्टान्नानि च सङ्ग्रहीतुं नैव व्यस्मरत्।

एवमपराऽपि अविस्मरणीया यात्रा तेन सहाकारि मया गुवाहाटीपत्तनाय दिल्लीतो विमानेन प्रातर्नववादने जनवरीद्वितीयदिनाङ्के ई.वी. २०१४ वर्षे। तिथिस्तस्मिन् दिने द्वादशी। वर्षेभ्योऽहं फलाहारेण एकादशीव्रतमनुतिष्ठन् द्वादश्यामन्नपारणां करोमीति नियमः। परन्तु तस्मिन् दिने प्रातः सार्धषड्वादने गृहात् प्रस्थानकारणात् गृहेऽन्नग्रहणं कर्तुमलब्धावसरः सपदि धावितोऽहं विमानपत्तनाय। सपादाष्टवादने विमानपत्तने मया शुक्लवर्यो लब्धः। सामान्यसमुदाचारातिपातात् परं स मामाह- 'नन्दमहोदय, स्तूते मे आलुक-शुष्कव्यञ्जनं, पूरिकाश्च सन्निहिताः सन्ति सद्यो विनिर्मिताः कवोष्णाश्च। क्वापि निभृतं चलावः। तत्रैव भवान् भोजनं करोतु। द्वादशी तिथिरद्य नु!' अहमचिन्तयं यथा शुक्लवर्यमुखेन ममात्मा मामिदं भणतीति। अहं सादरं तस्यादेशमनुपालयन् पूरिकाभोजनेन द्वादशीव्रताभिरक्षाव्याजेन स्वोदरमपूरयम्, कार्तज्ञ्यं चात्मना व्याहरं शुक्लवर्यस्य। सर्वघटे तस्यात्मवद् दृष्टिः। आवयोः

परिचयस्य नैकवर्षावधौ मया शुक्लमहोदयः क्वापि क्षणायापि विषण्णो नावलोकितः। सदैव प्रसन्नवदनः, स्मेरमुखश्च। अस्योपस्थित्या विद्वत्समवाय उज्जीवतीव। मन्मुखात् पद्यानि विशेषतः पण्डितराजकविताः श्रोतुमसौ मां दर्शनमात्रेण प्रेरयति, श्रुत्वा च प्रसीदति। कर्मनिष्ठाऽस्यात्यन्तं दृढा। अकल्पनीयापीच्छाशक्तिः। प्रभावस्त्वस्य मयि महान्। कामयेऽहमस्य शरदां सहस्रात् पारे जीवनम्।

अनुभवाम्यहं यदावयोः परिचये गृहीतं मया तस्मात् भूरि। उपहृतं न मया किमपि तस्मै पत्रमेतदन्तरेति।

**क्व स शुक्लो रमाकान्तः क्वाहं भागीरथिर्लघुः।**
**बिन्दुर्भजति गङ्गात्वं रमाकान्तनखाश्रयात्॥**

# मद्भारतीप्रेरकाः श्रीरमाकान्तशुक्लाः

**सोमेश कश्यपः**
'कविशार्दूलः'
वैद्यनाथवीथिः वैद्यनाथ धाम
देवघरः झारखण्डम्-८१४११२

श्रीवेङ्कटनायककृपाप्रसादमतानाम् आधुनिकसंस्कृतकाव्यधुरीणानां श्रीमतामस्मदाचार्यकल्पानां कविकुञ्जराणां रमाकान्तशुक्लमहाशयानां विषये मल्लेखनी कदाप्येकवचनगा भवितुन्नार्हति। तेषु मेऽतिश्रद्धावशादतो विद्वद्भिः नात्र दोषो परिगणयितव्यः। उत्तरप्रदेशे प्राप्तजन्मभिरमीभिस्सह मज्झारखण्डीय-मूढस्य सम्बन्धः कथमेतावान् प्रेमदामबद्धो जात इति विश्वेश एव जानीयात्। परं ममात्र सौभाग्यममीषामाचार्यगौरवाणामस्ति मयि प्रीतिर्विशेषेति भावम्भावं गलदश्रुनयनस्सम्भवाम्यहम्। किं लिखानि? शब्दाः न्यूनाः श्रीमतां विषये स्वीयभावप्रकाशनाय।

श्रीमतां प्रभावः मदीये जीवने अतितरां मौख्यं भजते। यदाहं पञ्चदशवर्षवयस्क आसं नवमकक्ष्याधीयानस्तदैव मणिकाख्ये पाठ्यपुस्तके एतेषां 'भाति मे भारतम्' इति गीतिकाव्यस्य अंशं 'भारतेनास्ति मे जीवनं जीवन'मित्याख्यमधीत्य ओजःपूर्णस्सन्नमीषां दर्शनार्थमीश्वरं मनसा प्रार्थयम्। तत एव च मदीया बुद्धिः संस्कृतसाहित्यपठने अत्यभियुक्ता च जाता। मदीयमध्ययनं दशमकक्ष्यापर्यन्तमेकस्मिन् आंग्लमाध्यमिकविद्यालये सम्पन्नतामभजत। ततः परमेतेषां संस्कृतधुरीणानां प्रभावः इत्थं मज्जीवनेऽभवद्यत् गृहस्थाभिभावकानां कथनम् अमत्वापि मया नैजं महाविद्यालयीयाध्ययनं संस्कृतमाध्यमेन प्रारब्धम्। अमीषां 'भाति मे भारतम्'इति काव्यपठनलोलुपेन मया एतद्ग्रन्थाभावात् विद्यालयाध्ययनकाले अन्तर्जालपुटमाध्यमेनैव 'भाति मे भारतम्'आस्वाद्यते स्म। तन्मुहुर्मुहुश्शृण्वता ततः प्रेरणामवाप्य दशमकक्ष्याधीयता मया तदानीमेव वाणीकृपया गैर्वाण्या श्लोकरचनाः प्रारब्धाः। मदीया प्रथमा शार्दूलविक्रीडितच्छन्दोबद्धाः श्रीवैद्यनाथपञ्चकमित्याख्या मौक्तिकरचना २०१२तमे ईसवीयेऽब्दे दिल्लीसर्वकारस्य दिल्लीसंस्कृताकादम्याः पुरस्कृता च जाता।

तत्पुरस्कारग्रहणाय यदा अखिलभारतीयनवोदितसंस्कृतकविप्रतियोगितायामहं राष्ट्रराजधानीं नवदेहलीं प्रत्यागत आसं तदैव मदक्षिणी अमीषां कविपुङ्गवानां दर्शनलोलुपे आस्तां परं तदा मदीयेयं मनीषा दैवादसफला जाता। ततः पुरस्कारं गृहीत्वापि दुःखितमनाः सन्नहं स्वीयजन्ममहीं प्रत्यगच्छम्। देहलीं गत्वापि तेषां दर्शनं न प्राप्तमिति कारणात् बहुकालं यावत् खेदो मन्मनसि दार्ढ्येन स्थानमभजत परं तथापि आशा मया न त्यक्ता। तत्र प्रत्यहं श्रीवैद्यनाथो मया प्रार्थ्यते स्म यत् कथञ्चिदपि एतेषां दर्शनलाभः सम्भवेदिति। दशमकक्ष्यायाः परीक्षां प्रथमश्रेण्यामुत्तीर्य पुनरहमेकदा संस्कृतपठनाय देहलीं प्रति गन्तुं व्यचारयं परं सत्यमेवोक्तं यत् **ललाटलिखिता रेखा परिमार्ष्टुं न शक्यत** इति तदपि दैवान्नैवासमभवत्। अपरञ्चाहं संस्कृताध्ययनाय आन्ध्रप्रदेशं प्रत्यगच्छम्। तत्र च श्रीवेङ्कटनायककृपया तिरुपतौ राष्ट्रियसंस्कृतविद्यापीठे प्राक्शास्त्रिकक्ष्यायां प्रवेशमलभे। तत्रेषद्व्याकरणन्यायादिशास्त्राधीयता मयैकदा तत्रस्थमहा-महोपाध्यायपट्टाभिरामशास्त्रिग्रन्थालये 'भाति मे भारतम्'इत्याचार्यपादानां गीतिकाव्यपुस्तकमालोकितम्। तद्दर्शनानुपदमेव मया तत्पुस्तकरत्नं सपदि ततस्वीकृतम्। तदारभ्य प्रत्यहं त्रैकालिकं तत्काव्यपाठं त्रैकालिकसन्ध्यावन्दनमिव मद्दैनन्दिन- चर्यायाः अभिन्नमङ्गीभूतं जातम्। अनेन पद्मश्रीशुक्लमहाभागानां मदीया दर्शनाभिलाषा इतोऽपि सुदृढा जाता। ततो मे कालस्तस्याः रमण्याः विरहकाल इव समभवत् यस्याः रन्ता/प्राणनाथः प्रावृषि तां विहाय विदेशे रमते। अमीषां काव्यस्थितिः मां यावत्तोषयति स्म ततोऽधिकतरमेतेषामनुपस्थितिः तदा मद्धृदं बाधते स्म। वस्तुतस्त्विदं यद् अमीभिस्सह अमीषां दर्शनं विनैव मे अन्तरङ्गं प्रेम सञ्जातमासीत्। तत्फलत्वेनैवाद्य मन्ये भगवता मय्यपि एतेषां प्रीतिः कल्पिता। तिरुपतावेव कालान्तरे २०१३ तमाब्दस्य दिसम्बरमासस्य एकादशे दिनाङ्के दक्षिणभारतस्य सुप्रसिद्धाशुकवीनां श्रीमतां श्रीनिधिस्वामिनां शतजयन्तीमुपलक्ष्य विल्लूर–आशुकविपरिवारसमिति–राष्ट्रियसंस्कृतविद्यापीठयोः संयुक्ततत्त्वावधाने कश्चन अखिलभारतीयकविसमवायः समायोजितः। यस्मिंश्च कार्यक्रमे इमे कविमणयः आहूता आसन्। अमून् कार्यक्रमे तत्रोपविष्टान् दृष्ट्वा यथा मे तदा चक्षुस्तर्पणं जातमित्थं मे सौरभी समभवत्स्थितिः। तत्कार्यक्रमान्तरैव काचन समस्यापूर्तिप्रतियोगिताप्यायोजितासीत्। यस्याञ्च

प्रतियोगितायां साफल्यं लब्ध्वा कविशार्दूल इति मानबविरुदं मया अमीषां समुपस्थितौ प्राप्तम्। तद्दिने अमीषामाशिषो मया साक्षात्प्राप्ताः। मदर्थं तद्दिनं महद्धर्षस्य दिनमासीत्। तस्मिन्नेवाहनि इमेऽपि कविपुङ्गवाः 'कविकुञ्जर' इति विरुदेन सभाजिताः विल्लूर-आशुकविपरिवारसमित्या। वाराणस्याः ज्ञानवयोवृद्धानां श्रीमतां शिवजीउपाध्यायानां करनीरजाभ्यां यदा अमीषां श्रीरमाकान्तवर्याणां सम्माननं संस्कृतज्ञानां समक्षं भवदासीत्तदा साक्षात् हरिहरमिलनमत्र भवतीत्थमासीन्मे प्रतीतिः। तस्मिन्नेव दिवसे मया कश्चन दृढसंकल्पो गृहीतः यदुपशास्त्रीं समाप्य ततोऽग्रेऽध्ययनं देहल्यामेव करणीयम्। आशयस्तु केवलमेतदेवासीत् यदमीषां दर्शनलाभो मध्ये मध्ये निश्चयेन भवेदिति। अग्रे तथैव फलितं प्राक्शास्त्रिकक्ष्यां तत्र प्रथमश्रेण्यामुत्तीर्य तिरुपतिं विहायाहं देहलीं प्रत्यागत्य दिल्लीविश्वविद्यालयस्य सेण्टस्टीफन्समहाविद्यालये प्रवेशं प्रापम्। ततश्चारब्धः मत्सौवर्षकालः मद्देहल्यागमनात् मासद्वयानन्तरमेव देववाणी-परिषदः ऊनचत्वारिंशत्तमसंकल्पनादिवसमुपलक्ष्य आयोजिते एकस्मिन् कविसम्मेलनेऽहमेभिराहूतः। एतदाह्वानं श्रुत्वा प्रफुल्लितमना अहं तत्र पूर्वोत्तमनगरस्य वाणीविहारस्थं आचार्यपादानां गृहं रमालयमपेलम्। तत्र च गत्वा स्वीयमुक्तककाव्यममीषां पुरतः अश्रावयम्। तद्दिनेऽप्यमीषां हार्दाशिषो लब्धाः। पुनश्च उज्जयिन्यां अखिलभारतीयकालिदाससमारोहे अन्यत्र च केषुचित्कार्यक्रमेषु एतेषां दर्शनलाभः शुभकामनाप्राप्तिश्चाभवताम्। एतेषामाधुनिककविकुलगुरूणां प्रत्येकमपि दर्शनं मयि ऊर्जायाः किञ्चन नूतनं स्रोतो वावृत्यते। अमीषां काव्यैः प्रेरणां प्राप्य सर्वदाहं नूतनकाव्यसर्जनाय श्वभ्रये। २०१५ तमसंवत्सरस्य मार्चमासे दिल्लीसंस्कृताकादम्याः अखिल-भारतीयनवोदितकविप्रतियोगिता एतेषां कविकुञ्जराणामाध्यक्ष्ये आयोजिता। तत्र एतेषां समक्षं पुनर्मया काव्यपाठावसरः प्राप्तः। इमान् तत्र मञ्चासीनान् दृष्ट्वा मया सोत्साहं 'मद्भारती शोभत' इति स्वरचितकाव्यपाठोऽकारि। तत्र अमीषां पाणिपुष्कराभ्यां पुरस्कारोऽपि लब्धः तत्कार्यक्रमानन्तरमेभिस्सह वार्तालापस्य तोषदावसरो ईषत्प्राप्तः। स च ईषदवसरः मत्कृते स्वातिनक्षत्रम् इवासीत्। वार्ताक्रमे आचार्यपादैरुक्तं तदा यत्- 'कविशार्दूलभवद्रचनायां प्रौढिर्वर्तते' सा च प्रौढिर्भवता आजीवनं रक्षणीया।' अहन्तु न जाने का वा प्रौढिः

मत्सरलवाक्षु परं तद्दिनात् प्रत्यहमहं प्रयते शुद्धसमृद्धभारत्यै। पुनरैषमः अप्रिलमासस्य षष्ठे दिनाङ्के दिल्लीसंस्कृताकादम्यैव आयोजिते पद्मश्रीरमाकान्त-कविसाक्षात्कारकार्यक्रमे मया एतैः सह एकस्मिन् मञ्चे उपवेष्टुं भर्मावसरो लब्धः। यतो हि स कार्यक्रमोऽमीषां साक्षात्कार्यक्रम आसीदित्यतो मया एतेषां काव्यशक्तिव्यक्तित्वोर्जादिविषयेषु नैके प्रश्नाः अमी पृष्टाः। ततः प्राप्तान्युत्तराणि मया अद्यावधि स्वीयजीवने प्रयुज्यन्ते।

ऋतं वच इदं -'**कालेन फलते तीर्थं सद्यस्साधुसमागमः**' महापुरुषाणामीषत्कालिकसम्पर्कोऽपि बहुफलदायी भवति। इमे आधुनिक-संस्कृतजगतस्तादृशाः कल्पतरवस्सन्ति यच्छायायां मादृशा नैके गीर्वागाधारकाः किञ्च लघीयांसः कवयः काव्यं कल्पन्ते। कल्पनानुपदञ्च काव्यश्रियं प्राप्नुवन्तो वर्धन्ते। अमीषां 'भाति मे भारतम्'इति गीतिकाव्यं साम्प्रतिकबहूनां काव्यानाम् उपजीविकाव्यतां भजते। नात्र कस्यचनापि विप्रतिपत्तिः। आचार्यपादानां पूर्वं स्रग्विणीछन्दः स्तुतिपरकाव्येष्वेव प्रायः दरीदृश्यते स्म। परममीषां 'भाति मे भारतम्' इति सद्रचनया इदं छन्दः प्रतिजनमुखीभूतं कविसमवाय- प्रियञ्च जातम्। अमी स्रग्विण्युद्धारका इति यद्यहं जिगामि चेन्नात्रेषदपि अतिशयोक्तिः। निश्चप्रचमिमे स्रग्विण्युद्धारकाः। अमीषां वाणीसुतानां व्यक्तित्वमतितरां प्रभावशालि वर्तते एतत्तु सुस्पष्टमेव एतैः किञ्च एतत्काव्यैः प्रेरिताः अद्य आसेतुशीतनगं बहवोऽपि छात्राः काव्यानि प्रयतमानाः कुर्वाणाश्च वर्तन्ते। इमे सहस्रायुष्याः सन्तस्सदैव इत्थमेवास्मासु नवोर्जस्सञ्चारं विदधतु। अस्मान् सर्वानपि एवमेव सन्मार्गे प्रेरयन्तु। आचन्द्रतारारुणमिमे वाणीजगतः अभिभावकत्वेन राजन्ताम्। अमीषां काव्यज्योत्स्नया आलयं काव्यव्योम इदं भासताम्। आभिरेव कामनाभिः श्रीवैद्यनाथचरणतामरसयोरमीषां सहस्रायुःप्रार्थनां समर्पयम्॥

●

# संस्मरणम्

**डॉ. अरविन्दमिश्रः**
वरिष्ठसहायनारायणकप्रोफेसरः
शिक्षाशास्त्र (बी.एड.) विभागे
उत्तराखण्डसंस्कृतविश्वविद्यालयः, हरिद्वारम्
पिन कोड- 249402

'भाति मे भारतम्' पङ्क्तिरियं यदा श्रूयते पठ्यते दृश्यते वा तदा एकमेव चित्रं व्यक्तित्वं च मनसि समुत्पद्यते तदस्ति प्रो. रमाकान्तशुक्लवर्य्याणां कविपुङ्गवानां महनीयानाम्। शुक्लमहोदयाः राष्ट्रवादिकवयः, भाषासुबोधकाः, मर्मज्ञाः, रसज्ञाश्च। नैकवारं तैः महाभागैः सह काव्यपाठाय अवसरः प्राप्तः मया। ते न सन्ति हास्यकवयः अर्थात् हास्यकविरूपेण केवलं तेषां प्रतिष्ठा नास्ति किन्तु तेषां भाषाव्यवहारे पदे पदे अनुभूयते हासः हास्यरसो वा। तेषां कवितानां शृङ्गारः नास्ति प्रधानत्वेन तेषां प्रसिद्धिर्नास्ति शृङ्गारकविरूपेण, किन्तु तेषां व्यवहारभाषायां शृङ्गारमनुभवामो वयम्। तेषां कीर्तिः नास्ति केवलं वीररसकविरूपेण, किन्तु यदा ते काव्यपाठं कुर्वन्ति तदा श्रोतारः अनुभवन्ति यदयं कविस्तु वीररसस्यैव। अतः रससिद्धाः कवयस्ते। अद्यतनीये संस्कृतजगति भारतीयसमाजे च एतादृशी श्रुतिरस्ति यत् भारत-वैभवस्य येन केनापि कविना समग्रज्ञानं कृतम्। सः आसीत् अस्ति भविष्यति च केवलं प्रो. शुक्लो रमाकान्तः। मदीया एकाऽनुभूतिरस्ति यत् ते केवलं स्वकीयां कवितामेव हि न श्रावयन्ति ध्यानेनापितु अन्यान् कवीन् शृण्वन्त्यपि सावधानमनसा। अनेन ज्ञायते यत् ते न सन्ति असहिष्णुकवयः। 'शुक्लमहोदयानां स्मृतिरद्वितीया वर्तते। तेषां ज्ञानं बृहत्तरमितीदं वाक्यमासीत् अभिराजराजेन्द्रमिश्रवर्याणां तेषां विषये। इदं वाक्यं मिश्रमहोदयेः राजस्थानप्रदेशस्थे बूंदीराजकीयमहाविद्यालये २०१५ तमे खैष्टेऽब्दे नवम्बरमासस्य २७-२८ तमयोर्दिनाङ्कयोः समायोजितायाः राष्ट्रियसंगोष्ठ्याः अवसरे कथितम्। वस्तुतः शुक्लवर्याणां समं व्यक्तित्वं

संस्कृतवक्तृत्वं वर्तते, नास्ति काचिदत्र विचिकित्सा। तेषां विदुषां व्यक्तित्वं संस्कृतपरिमितं वर्तते। अतः यत्र यत्र संस्कृतं तत्र तत्र शुक्लोऽयं रमाकान्तः। इति वक्तुं शक्नुमः वयम्। मया ज्ञातं यत् शुक्लवर्याणां व्यक्तित्वं कृतित्वञ्चाश्रित्यैकः अभिनन्दनग्रन्थः प्रकाश्यते। अतः अवसरेऽस्मिन् शिशुपालवधे प्राप्यते एकः श्लोकः- यस्यार्थेन सह स्वकीयां भावनामहमपि संयोज्य निवेदयामि

**हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।**
**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्।**
**शतं जीव शरदो वर्धमानशतं हेमन्तान् शतयो वसन्तान्।**
**शतमिद्राग्निः सविता बृहस्पतिः शतायुः स हविषेमं पुनर्गुहा।**

ओम् शान्तिः शान्तिः शान्तिः।

●

